यः पोथी शहर बनारस दिवाकर छापाखाने मे गोखमयुष शिवचरन के छापाखाने मे
छपी साकिन मोहल्ले भदैनी कालीमहल के पास वा: दुर्गा मिश्र ने छापनेवाले का
नाम मातादयाल यः पोथी जिसको लेनी हो सो चांदनी चौक में कुंजगली के पश्चिम
और रामचरन के दुकान पर मिलैगी मी: चैत्र सुदी १० सम्वत १९ २५ वार गुरु: ॥

...॥ यनमः ॥ यो लीलया संतनुते ऽत्र विश्वं तस्यालयस्तात्मनि विश्वरूपे लयं नयत्याक्र्य पूर्णरूपः शिवं तनोत्वाभुरा

...भो १ मह्यो महत्समाराध्य समाकर्ण्य गुरोर्गिरः समुच्चीनीलकंठीवत्तु शांतिकपौष्टिके २ प्रतारवै राष्ट्रतमत्र किंचि

...तु निर्मूलतपात्कृतिकितं ऊनोक्तितातो नहि तेन कांचित् वपुष्यहीनापुचितिर्न हीयते ३ अस्य पापविशेषनिदा

नके ... मात्रानिष्टनिवर्तकपापाप्रयोजकं वैधकर्म शांतिकं क्षयादिहरदानादानतिप्रसंगवारा परंतु नेदानकांतं आमु

ष्मिकानिष्टनिवर्तकैसंवारपितुर्ऐहिकेति प्रायश्चित्तेवारपितुमात्रपदं प्रायश्चित्तंत्वामुष्मिकानिष्टनिवर्तकमपि अभिवा

रप्रसेभिचारदोषरपितु पापाप्रयोजकमिति तपोः फलतो हि सात्वेन तदनुष्ठाने प्रायश्चित्तोक्ते अपायप्रयोजकत्वात् आ

निष्टनिवर्तकत्वं च शांतिकस्य तन्निदानपापनाशरूपसामग्रीनिघटकत्वेन पुष्टिफलकं वैधकर्म पौष्टिकं तत्र परिभाषा मार्कं

डेयपुराणे शिरःस्नातश्च कुर्वीत दैवं पित्र्यमथापि वा प्राङ्मुखोदङ्मुखो वापि श्मश्रुकर्म च कारयेत् १ तथैव देवार्चनादिकर्म

णि तथा गुर्वभिवादनं कुर्वीत सम्यगाचम्य प्रयतोपि सदा द्विजः २ वृहन्मनुः प्राणानायम्य कुर्वीत सर्वकर्माणि संयतः मार्कंडे

य संकल्पविधिवत्कुर्यात्स्नानदानव्रतादिकं देवलः मासपक्षतिथीनां च निमित्तानां च सर्वशः उल्लेखनमकुर्वाणो न तस्य फलभा

ग्भवेदिति मासपक्षतिथयः प्रयोगाधिकरणभूताः सर्वेपि परंतु अनेकदिनसाध्यकर्मणि आद्यदिने संकल्पकालीनां तिथिमधिक

रणत्वेनोक्तिरथ ज्योतिष्टोमेनाहं यक्ष्य इत्यादिसंकल्पवाक्यं प्रयुंजते यायजूकाः तत्तु पदानामन्वयायोगादनादनादर्त्तव्यं य
दपि केचित्तेन तेन रूपेण प्रयोगांगतया विहितानामेव मासादीनामुल्लेख इति तदपि न मानाभावात् अविहितमासादिस
आधानादौ मासपक्षादिविशेषेणा ज्योतिष्टोम एकादशीव्रतादौ च मासपक्षयोरुल्लेखाभावप्रसंगाच्च अतो ज्योतिष्टोमादा
वेकादश्यादिपूर्णिमांतानामुल्लेखः एवमन्यत्रापीति दिक् अत्र च शूद्राणामप्यधिकारः श्रावयेच्चतुरो वर्णान् कृत्वा ब्रा
ह्मणमग्रतः इत्यादिवाक्येषु श्रवणस्य स्पष्टत्वार्थत्वे न यागार्थं प्राप्तत्वेन तद्विधौ वाक्यवैयर्थ्यापत्तेः शौनकविवक्षया श्रवणविधि
नां तेषां पुराणश्रवणाधिकारेण ज्ञानसद्भावात् वैदिकमंत्राभावे कथं तत्कर्मस्वधिकार इति चेत् शृणु धर्मेप्सवस्तु
धर्मज्ञाः सतां धर्ममनुष्ठिताः मंत्रवर्ज्यं न दुष्यंति प्रशंसां प्राप्नुवंति चेति मनुना मंत्रवर्ज्जनात् यत्तु मेधातिथिर्मंत्रवर्जिते
शूद्र[illegible]दिष्वधिकारार्थमिदं न तु समंत्रकेषु मंत्रपर्युदासार्थमिति तत्र अमंत्रकोपवासादिषु शूद्रस्य विधिनैवाधिका
[illegible]वाक्यानर्थक्यापत्तेः अत एव मोक्षधर्मेष्वपि मंत्रवर्जं न दुष्यंति कुर्वाणाः पौष्टिकीं क्रिया इति अत्रैतद्वाक्य
कीर्त[illegible]त्वेन तत्सामान्योपस्थितयोरनयोः क्रिययोरुद्देशेन मंत्रवर्ज्जनविधौ पौष्टिकीमित्युद्देश्यविशेषणत्वेनाविवक्षितं
वावन[illegible]तत्र काश्यैतस्य चैकैकवस्तु तिमूलत्वेन कल्पते गृह्यपरिशिष्टे आदौ विनायकः पूज्यश्चान्ते तु कुलदेवताः शौनकः सु
मजंत

...त्वन विधिं वक्ष्यामो यथ यथाविधि प्रयोक्तृ कर्मणामादावेते चोदयसिद्धये कर्मप्रदीपे कात्यायनोदिषु तु सर्वत्र मातरः सग
...षाः पूजनीयाः प्रयत्नेन पूजिताः पूजयंति ताः १ प्रतिमासु च शुद्धासु लिखित्वा वा पटादिषु अपि वाक्षत पुंजेषु नैवे
न कैश्चिद्विधैः २ कुड्यलग्ना वसोर्धाराः सप्तवारान्घृतेन तु कारयेत् च धारा वानातिनीचान चोच्छ्रिताः ३ आयुष्याणि च शान्त्यर्थं
जप्त्वा तत्र समाहितः षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेदिति ४ षड्भ्य इति छंदोग कात्यायनपरं अन्येषां तु नव दैवत्य
... ष्टकासु वृद्धौ च गयायां च क्षयेऽहनि अत्र मातुः पृथक् श्राद्धं अन्यत्र पतिना सहेति १ वचनात् सर्वत्राचार्योपयजमा
न स्वशाखोक्त एव अन्यथाचार्यस्य यजमानशाखाध्ययनाभावे तच्छाखीयपदार्थानां निर्वाह एवं न स्यात् स्वशाखपानु
ऋत्विजस्तु भिन्नशाखोक्त अपि सर्वथाचार्यवद्ब्रह्मर्त्विजो मधुपर्केण पूज्याः ऋत्विजो वृत्वा मधुपर्कमाहरेदित्याश्वलायनोक्तेः
सम्पूज्य मधुपर्केणात्र ... कर्म कारयेदिति विश्वामित्रोक्तेश्च यत्र ऋत्विग्यच्छाखीये कर्म करोति तत्तच्छाखोक्तेन प्रकारेणाको डा
नुसमयेन मधुपर्कं कुर्वंतीति याज्ञिकाः केचित्तु परे यजमानशाखोक्तेन यजमानेन स्वशाखीया ऋत्विग्भिश्च स्वस्वशाखीयाः पदा
र्थाः अनेकेषु ऋत्विक्षु पदार्थानुसमयेनानुष्ठेया इति युक्तं तत्तच्छाखाध्ययनजन्यज्ञानस्यांगत्वादेकप्रयोगविधिपरिग्रहाच्च

…त्वं दानप्रतिग्रहोपस्थितिवत् वैदिकहोमोपस्थितेश्च प्रयुक्तप्रत्यग्न्यस्मार्त एव श्रौतं वैतानिक एवेति नियमेन स्मृत्यु
क्ते कर्मणि श्रौतस्मार्ताग्न्योः प्राप्तिः संभाव्यते तथापि न साहवनीयादावसथ्य त्वरूपेण किंतु लौकिकसाधारणज्वलनत्वेनै
…वैधाहुति प्रक्षेपे आहवनीयत्वादि विधितापत्तेश्च अतएव सर्वाधानिन औपासनाभावात् वैतानिकाभावेश्च वैने
नगाह्य लौकिक एव कार्यं अमुमेव सर्वमर्थं स्मृत्यर्थसारः कृदमपि संजग्राह शान्तिहोमोपासने कुर्यात्सर्वाधानी तु लौकिके
ऽप्यलौकिकं कुर्याच्छ्रौतं वैतानिकाग्निष्विति १ यत्तु नारायणवृत्तौ सर्वाधानिना सीमंतोन्नयनादिगार्ह्यकर्मार्थं स्मार्ताग्निरुत्पा
दनीय इति तत्र मूलं बौधायनसूत्रं यदपि वितानेश्वरोगृह्ययज्ञ औपासन इत्युक्ते तत्र मूलमन्वेष्यं कात्यायनपरं वा तत्तत
श्च तथाम्नानात् अतएव मूलविनायकशांतौ लौकिकाग्निमेव बोधयतः अतः स्मृत्युक्ते लौकिक एवेति सत्याकरे शुभया
त्रं तु कोश्चस्यात्तेनाग्निप्रणयं चत्तु धः तस्याभावे शरावे शानवेनाभिमुखं च तत्र १ गाभिलीये आहूय चैव वह्निं जज्योपोपपत्र विहि
तो नलः तथा लक्षहोमे तु वह्निः स्यात्कोटिहोमे हुताशनः पूर्णाहुत्यां मृडो नाम शांतिके वरदः सदा १ अन्येषु संस्कारादि
कर्मसु अनेनाम विशेषाः प्रयोगरत्ने होमविशेषो गोभिलीये नमुक्त केशो जुहुयान्नानुपादिकालालोकपाश्चैव विघ्नविना
यकाः ३ जगतां शांतिकर्तारो ब्रह्माद्याश्च महर्षयः माविघ्नं मा च मे पापं मासंतु परिपंथिनः ४ सौम्या भवंतु तृप्ताश्च भूतप्रेताः

शुभावहाः दद्यादित्यत्रापि देहल्यांदीपवदन्वेति विनायकस्य जननीमुपतिष्ठेत ततोंबिकां दूर्वासर्षपपुष्पाणां दत्वार्घं पूर्णमं
जलिं अनंतरं विनायकमंबिकां च दूर्वार्घं घमंजलिं अर्घं च दत्वोपतिष्ठेत उपस्थानमंत्रमाह रूपं देहि यशो देहि भगं भग
वति देहि मे पुत्रान्देहि धनं देहि सर्वान्कामांश्च देहि मे १ देहि मे भगवन्भगमित्युक्त्वा विनायकमप्युपतिष्ठेतेति विज्ञाने
श्वरः अत्र मदनः विनायकोपस्थानं कृत्वांबिकोपस्थानं कार्यमित्याह किंच ततः शुक्लांबरधरः शुक्लमाल्यानुलेपनश्च ब्रा
ह्मणान्भोजयेद्दद्याद्वस्त्रयुग्मं गुरोरपि गुरोराचार्याय भूमिपिण्डाच्च दक्षिणामपि एवं विधिं कर्म कुर्वतः फलमुक्तं एवं विनाय
कं पूज्य ग्रहांश्चैव विधानतः कर्मणां फलमाप्नोति श्रियमाप्नोत्यनुत्तमां १ अस्याः कर्मांगत्वेन पौष्टिकत्वेन च वर्णचतुष्टयस्या
प्यत्राधिकारः शूद्रस्य तु मंत्रवर्जं तान् प्रक्रम्य मंत्रवर्जनं न दुष्यति कुर्वाणाः पौष्टिकीं क्रियामिति मोक्षधर्मे श्रवणात् महार्णवे
पि यजमानस्तु शूद्रश्चेदिति वदन् तेषामधिकारमभिप्रैति ० इति विनायकशांतिः ० अथ प्रयोगः कृतांते शकाली सं
कीर्त्य विनायकोपसर्गनिवृत्त्यर्थममुककर्मणो निर्विघ्नतासिद्ध्यर्थं वा विनायकस्नपनं करिष्य इति संकल्पयेत् ततः पुण्याह
वाचनवृद्धिश्राद्धांतं यथोक्तं कुर्यात् अपरे पुण्याहवाचनं नेच्छंति अग्रे तस्य कर्तव्यत्वात् अथाचार्यः कलशान्संपूज्य पार्श्वतो भौ
मं जं तथा ऋत्वस्य पितरं केतुमर्कमार्गसितं तथा २ धिष्ण्यांक्षेदपुत्रं चक्रांगं लक्ष्म च भारत विधुं दैवाहुतेर्येन दकस्य चधारि

आ॰ म॰ ग्रामिति २ व्योमकेशः शिवः भीमजोमणेशः आर्यो भौमः सितः शुक्रः धिषणो गुरुः इंदुपुत्रः बुधः कोणः शनैश्चरः लक्ष्मीतद्रं
४ श्चंद्रः वाहुलेयः स्कंदः नंदकधारी कृष्णः गौरसर्षपकल्केन साज्येनोत्सादितस्य च सर्वौषधैः सर्वगंधैर्विलिप्तशिरसस्तथा १
भद्रासनोपविष्टस्य स्वस्तिवाच्या द्विजाः शुभाः गौरसर्षपपिष्टेन गोघृतयुक्तेनोत्सादितस्योद्वर्तितस्य सर्वौषधानि छंदोगपरि
शिष्टे कुष्ठं मांसी हरिद्रे द्वे मुरा शैलेय चंदनं वचा कर्पूर मुस्ता च सर्वौषध्यः प्रकीर्तिताः १ सर्वगंधे श्चंदन कुंकुमागरु काल्लि
रिका जातीफलादिभिः वेषां सितवस्त्रप्रच्छादितश्रीपर्णीपीठं भद्रासनं स्वस्तिवाच्याः स्वस्तिवाचनीयाः ब्राह्मणा द्वारा भ
स्वस्तिवाचनं कार्यं इत्यर्थः अश्वस्थानाद्गजस्थानाद्वल्मीकात्संगमाद्ध्रदात् मृत्तिका रोचनां गंधं गुग्गुलुं चाप्सु निक्षि
पेत् १ या आहृता एकवर्णैश्चतुर्भिः कलशैर्ह्रदात् चर्मण्यानडुहे रक्ते स्थाप्यं भद्रासनं ततः २ अनडुहं चर्म च वेद्या
मध्ये प्राग्ग्रीवमूर्ध्वलोमावस्थाप्यमिति विज्ञानेश्वरः याज्ञवल्क्ये ति चत्वारोपि कलशा भद्रासनस्य पूर्वादि चतुर्दिक्षु स्थाप्या इति
ज्ञापदीपिकाः पूर्वादि दिक्षु यथावस्थित कलशोदकेनाभिषेकक्रमेण मंत्रानाह सहस्राक्षं शतधारमृषिभिः पावनं कृ
तं तेन त्वामभिषिंचामि पावमानीः पुनंतु ते १ भगं ते वरुणो राजा भगं सूर्यो बृहस्पतिः भगमिंद्रश्च वायुश्च भगं सप्तर्षयो
ददुः २ यत्ते केशेषु दौर्भाग्यं सीमंते यच्च मूर्द्धनि ललाटे कर्णयोरक्ष्णोरापस्तद्घ्नंतु ते सदा ३ सहस्राक्षं बहुशक्तिकं ॥

पवमानीइत्यनंतरमापइतिशेषः भगंकस्याणं दौर्भाग्यमकल्याणं उदग्निशवस्थितेनाभिषेके पूर्वोक्तास्त्वपराश्चमंत्राः म
वैश्चतुर्थमिति विज्ञानेश्वरोक्तलिंगात् किंच स्नातस्य सार्षपतैलेनश्रुवेणौदुंबरेणतु जुहुयान्मूर्द्ध्नि कुशान् सव्येनप
रिगृह्य च १ सव्यपाणिगृहीतकुशांतरिते सर्षपतैलेनउदुंबरनिर्मितेनश्रुवेणयजमानमूर्द्ध्नि जुहुयात् आचार्यः मितश्च
संमितश्चैव तथा शालकटंकटौ कूष्मांडो राजपुत्रश्चेत्यंते स्वाहासमन्वितैः १ नामभिर्बलिमंत्रैश्च नमस्कारसमन्वितैः न
मः स्वस्ति स्वाहेति चतुर्थी एतानि च षट् विनायकनामानि इति विज्ञानेश्वरः अपरार्कस्तु शालकंटकटंकट इति एकवचनांतेप
पाठ तेन तन्मते पंचैवाहुतयो भवंति अत्र लौकिकेग्नौ स्थालीपाकविधिना चरुं कृत्वा तेभ्य एवाहुतिषट्कं हुत्वेंद्रादिद
शलोकपालेभ्यस्तन्नाम्ना बलिं दद्यादिति मितासरायां तत्र चरुहोमे इंद्रादिभ्यो बलिदानेच मूलं चिंत्यं अंते स्वाहा
समन्वितैर्नामभिर्जुहुयात् नमस्कारसमन्वितैश्च मितादिभ्यो बलिं दद्यात् इति वक्ष्यमाणेनैव ध्यत इति तु युक्तं
दद्याच्चतुष्पथे शूर्पे कुशानास्तीर्य सर्वशः कृताकृतांस्तंडुलांश्च पललौदनमेव च १ मत्स्यान् पक्वांस्तथैवामान् मांसमेवा
वरेव तु पुष्पं चित्रं सुगंधं च सुरां च त्रिविधामपि २ मूलकं पूरिकापूपांस्तथैवोंडेरकस्रजः दध्यन्नं पायसं चैव गुडपि
ष्टं समोदकं ३ एतान्सर्वानुपाहृत्य भूमौ कृत्वा ततः शिरः कृताकृतान्स्तत्र हतान् पललौदनः तिलपिष्टमिश्र औदन

इति मिताक्षरायां अपक्वमांससमिश्र ओदने इति तु पुक्तं पललं कृच्छ्रमामिति कोशात् अमानपक्वान्न मांससमेतावदेवेतु पैत्क
मपक्वं च मांसमन्यादित्यर्थः त्रिविधा सुरा गौडी पैष्टी माध्वी च मूलककंदाकारो भक्ष्यविशेष इति मिताक्षरायां सरूपत
राव ग्राह्यमिति तु पुक्तं उभयमपि ग्राह्यमिति महार्णवे अपूपाः स्नेहपक्वा गोधूमविकारा इति विज्ञानेश्वरः उंडेरकाः पि
इति कासस्न नानाविधास्ते मोताः स्वजइत्युच्यते गुडपिष्टग् इ मिश्रं शाल्यादिपिष्टं अत्र सुरामांसं चाब्राह्मणविषयं ब्रा
ह्मणेस्तु मांससुरास्थाने सत्त्ववण पायसदुग्धं च ग्राह्यं यापवलवणोपेतं मांसस्थाने प्रकल्पयेत् दुग्धं लवणसंमिश्रं सुरा
स्थाने प्रकल्पयेत १ इति स्मरणादिति महार्णवादिषु विनापक्वविकाविका गायत्र्यां विनायककर्मविकां च समस्तुस्यपूर्वोक्तः
द्रव्यजातं तयोरग्रत उपकृत्य तत्र शेषं भूर्ये निधाय चतुष्पथे न्नं संस्थाप्य बलिं दद्यादेतैर्मंत्रैः बलिं दत्वा देवा आदित्या
वसवस्तथा मरुतोप्याश्विनौ रुद्राः सुपर्णाः पन्नगा ग्रहाः १ असुरा यातुधानाश्च पिशाचा वा मातरो गणाः शाकिन्यो यक्षवेता
लयोगिन्यः पूतनाः शिवाः २ जृंभकाः सिद्धगंधर्वाः नागा विद्याधरा नगाः तितजानुकः उत्तानेनैव हस्तेन अंगुष्ठाग्रेण पी
डितं संहतांगुलिपाणिना स्रुवाग्रयतो जुहुयाद्धविरिति वहृकर्तृके होमे प्रसाहुति सामाशकेः होमारंभ एव देताश्च तुर्थ्यंते
नोदिरपसर्वाणि द्रव्याणि त्यजेदिति हेमाद्र्यादयः इति परिभाषा अथ विनायकस्नपनं याज्ञवल्क्यः विनायकः कर्मवि

प्रसिध्यर्थं विनियोजितः गणानामाधिपत्ये च रुद्रेण ब्रह्मणा तथा तेनोपसृष्टो यस्तस्य लक्षणानि निबोधत १ स्वप्नेऽवगाहतेऽत्य
र्थं जलं मुंडांश्च पश्यति काषायवाससश्चैव क्रव्यादांश्चाधिरोहति २ अंत्यजैर्गर्दभैरुष्ट्रैः सहैकत्रावतिष्ठति व्रजन्नपि त
थात्मानं मन्यतेऽनुगतं परैः ३ तेन विनायकेनउपसृष्टउपद्रुतः स्वप्ने स्नातसाऽपाह्निपतेतत्रमज्जति वा नत्ववगाहनमा
त्रं विवक्षितं तस्य भुभसूचकत्वात् अंत्यजैश्चांडालैः प्रत्यक्षलक्षणान्याह विमना विफलारंभः संसीदत्यनिमित्त
तः तेनोपसृष्टो लभते न राज्यं राजनंदनः १ कुमारी न च भर्तारं अपत्यं गर्भमंगना आचार्यत्वं श्रोत्रियश्च न शिष्योध्ययनं
तथा २ वणिक् लाभं न चाप्नोति कृषिं चापि कृषीवलः संसीदति कारणं विना दीनमनस्को भवति एतदुपलक्षणं
चक्ष्यदि इष्टसत्वेदृक् सामग्रीसत्वेन न प्राप्नोति तदा तदुपद्रुतो बोध्यः एतदुपद्रवपरिहारार्थं कर्माह स्नपनं तस्य कर्त्त
व्यं पुण्येऽह्नि विधिपूर्वकं अत्र पुण्ये ह्नीत्यविशेषेऽपि विशेषोऽपरार्के भविष्ये शुक्लपक्षे चतुर्थ्यां च वारेण धिषणस्य च
तिष्ये च वा ऽरेनक्षत्रे तस्यैव पुरतो नृपेति १ अत्रादौ देवपूजोक्ता तत्रैव व्योमकेत्विक्चतुष्टयंवरणपात् ऋत्विजोऽनु
सर्तोंतिकेचित् तदाचार्य एव वक्ष्यमाणमभिषेकं कुर्यात् यजमानः प्रतिमास्वक्षपुंजेषु वा शिवं पार्वतीं गणेशं वसुदे
वं केतुं अर्कं भौमं शुक्रं गुरुं बुधं शनिं चंद्रं राहुं स्कंदं कुंभं चावाह्य पूजयेत् ततः आचार्यः पंचवर्णचूर्णैः पूर्वादिच

शां·म·
६

तुर्दिक्षु स्वस्तिमध्यस्थवेद्यां चैकमिति स्वस्तिकपञ्चकमालिख्य मध्यस्थस्वस्तिकोपर्यानडुहं रक्तं चर्म प्राचीनग्रीवमूर्ध्वलोम
संस्थाप्य तस्योपरि श्रीपर्णीपीठं संस्थाप्य सितेन वाससा संछादयेत् एतद्भद्रासनमिति चतुर्षु स्वस्तिकेषु पूर्वादिदिक्षु चत्वा
रोपि ऋत्विजः कलशान्संस्थापयेयुः आचार्यो वा तत्रायं प्रकारः महीद्यौः पृथिवी चनेति भूमिं स्पृष्ट्वा संप्रार्थ्य ओष
धयः समितियवान् क्षिप्त्वा आकलशेष्विति तेषु कलशान् संस्थाप्य इमं गंगे इति तीर्थोदकेनापूर्य गंधद्वारेति चंदनागरुकस्
तूरीकर्पूरगोरोचना* दीन्गंधान्गुग्गुलुं च निक्षिपेत् ॐ या ओषधीरिति सर्वौषधीः ॐ प्रधयः समितियवान् काण्डात्कां
डादिति दूर्वाः अश्वत्थेव इति पंचपल्लवान् स्योना पृथिवीत्यनेन उद्धृतासि वराहेण कृष्णेन शतबाहुना. मृत्तिके हर मे पा
पं यन्मया दुष्कृतं कृतं इति अनेन पंच मृदः क्षिपेत् याः फलिनीरिति फलं स हिरत्नानि इति पंच रत्नानि हिरण्यरूप इ
ति हिरण्यं युवा सुवासा इति अनेन वस्त्रेण रक्तसूत्रेण च वेष्टयेत् पूर्णादर्वीति धान्यपूर्णपात्रं कलशोपरि निदध्यात्
अत्र च वरुणमावाहनपूजने अपि केचिदाहुः ततः कलशे सर्वे समुद्रा इति गंगाद्यावाहनं ततः कुंभाभिमंत्रणं कलश
स्य मुखे विष्णुः कंठे रुद्रः समाश्रितः मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः १ कुक्षौ तु सागराः सप्त सप्तद्वीपा वसुं
धरा। ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः २ अंगैश्च सहिताः सर्वे कलशं तु समाश्रिताः इति ततः कुंभप्रार्थना देवदा

नवसंवादेमथ्यमानेमहोदधौउत्पन्नोसितदाकुंभविधृतोविष्णुनास्वयं १ त्वत्तोयेसर्वतीर्थानिदेवाःसर्वेत्वयिस्थिताःत्वयि
तिष्ठंतिभूतानित्वयिप्राणाःप्रतिष्ठिताः २ शिवःस्वयंत्वमेवासिविष्णुस्त्वंचप्रजापतिःआदित्यावसवोरुद्राविश्वेदेवाःस
पैतृकाः ३ त्वयितिष्ठंतिसर्वेपियतःकामफलप्रदाःत्वत्प्रसादादिमंयज्ञंकर्तुमीहेजलोद्भव ४ सान्निध्यंकुरुमेदेवप्र
सन्नोभवसर्वदा इतितंत्रऋत्विजआनोभद्राइतिशांतिसूक्तंपठेयुरितिकेचित् आनोभद्रेतिशांतिसूक्तस्यराहूगणोभ
विश्वेदेवास्त्रिष्टुप् आद्यास्तृसप्तमीचजगत्योषष्ठीविराट्स्थानाशेषास्त्रिष्टुभः शांतिसूक्तजपेविनियोगः आनोभद्राःशंनोवा
तःपर्वतामित्यादिकंवा तस्मिन्नेवसमयेआचार्योभद्रासनस्योत्तरतैईशान्यांवावस्त्राच्छादितपीठस्थौविनायकप्रति
मामंबिकाप्रतिमांचाग्न्युत्तारणपूर्वकंप्रतिष्ठाप्यषोडशोपचारैःपूजयेदितिनिबंधकृतः ॰ तत्रविनायकमंत्रः ॰॰
गणानांत्वागृत्समदोगणपतिर्जगतीगणपत्यावाहनेविनियोगः गणानांत्वा॰ तत्पुरुषायविद्महेवक्रतुंडायधीमहि तन्नोदंति
प्रचोदयात् इतिवा गौर्यास्तुगौरीर्मिमायदीर्घतमाउमाजगतीगौर्यावाहनेविनियोगःगौरीर्मिमाय॰ सुभगायैविद्महे
काममालिन्यैधीमहि तन्नोगौरीप्रचोदयात् अत्रमिताक्षरायांचरुहोमस्तूक्तःशिष्टाश्चकुर्वंतितस्मिन्पक्षे आज्ञ
योगृह्योक्तविधिनाकुंडेस्थंडिलेवाग्निंप्रतिष्ठाप्यप्रादेशमात्रसमित्द्वयमादायास्मिन्होमेदेवतापरिग्रहार्थम

ग्रा॰ भ॰ न्वाधानं करिष्य इति संकल्प्य चक्षुषी आज्येनेत्यंतमुक्त्वा अत्र प्रधानं मितं संमितं संमितं शालंकटंकटं कूष्मांडं राजपुत्रं मेता:
७ एकैकया चर्वाहुत्या पक्षे शेषेणाश्विष्टिकृतमित्यादि युक्त्वाग्नावाद्ध्यात् अपरार्कमते तु पंचैवाहुते पक्षान्मतेन्वाधाने भ
होमद्वये च तथैवानुसंधेयं ततः परिसमूहनादि चरुश्रपणांतं कृत्वा गोघृतलोलीकृतेन गौरसर्षपकल्केनोद्वर्ति
तांगं सर्वौषधीचूर्णैः कस्तूरिकागरुचंदनादिभिर्लिप्तशिरसं यजमानं आचार्यो भद्रासन उपवेशयेत् ततो यजमा
नः स्वस्तिवाचनं कुर्यात् अनंतरं रूपगुणशालिनीभिः सुवासिनीभिः नीराजनं कारयेत् ततो भद्रासनात्पूर्वदेशा
वस्थितकलशमादायाभिषिंचेत् मंत्रश्च सहस्राक्षं शतधारमृषिभिः पावनं कृतं तेन त्वामभिषिंचामि पावमा
नीः पुनंतु ते १ ततो दक्षिणदेशावस्थितकलशमादाय भगंते वरुणो राजा भगं सूर्यो बृहस्पतिः भगमिंद्रश्च वायुश्
श्च भगं सप्तर्षयो ददुः इत्यनेनाभिषिंचेत् ततः पश्चिमदिगवस्थितमादाय यत्ते केशेषु दौर्भाग्यं सीमंते यच्च मूर्द्धनि ल
लाटे केशापो रक्ष्णोरापस्तघ्नंतु ते सदेति १ तत उदग्देशावस्थितं कलशमादाय पूर्वोक्तैस्त्रिभिर्मंत्रैरभिषिंचेत् वृहसराश
रेणान्येपि मंत्रा उक्ताः एतद्वैणवनं स्नानं सहस्राक्षमृषिस्मृतं तेन त्वां शतधारेण पावनान्यः पुनंतु मा १ शक्रादिदशदि
क्पाला ब्रह्मेशाः केशवादयः आपस्तघ्नंतु दौर्भाग्यं शांतिं यच्छंतु सर्वदा १ सुमित्र्या न आप ओषधयः संतु दुर्मित्रास्त

स्मेसंतु पोष्मान्दे ष्टिपं च वयं च द्विष्मः समुद्रा गिरयो नद्यो मुनयश्च पतिव्रताः दौर्भाग्यं घ्नंतु ते सर्वे शांतिं यच्छंतु सर्वदा १ पादगु
ल्फ़ो रुजंघा दौ नितंबोदर नाभिषु स्तनोरु बाहु हस्ताग्र ग्रीवा अंसांघ्रिसंधिषु २ नासाललाट कर्णाक्षके शांतेषु च यद
स्थितं तदापो घ्नंतु दौर्भाग्यं शांतिं यच्छंतु सर्वदा ३ इत्येतेरप्यभिषिंचेदिति केचित् चतुर्थकलशाभिषेचने एवैते पठनी
याः अथाचार्यो यजमानस्य पश्चिमतस्तिष्ठन् सव्यपाणिगृहीतकुशांतर्हितं यजमानशिरसि औदुंबरेण स्रुवेमार्षयं तैलं
लं जुहुयात् ॐ मिताय स्वाहा यजमानो मिताय स्वाहा यजमानो मिताय इदं न मम इति त्यजेत् दिसंवंसर्वत्रापि ॐ संमिता
य स्वाहा ॐ शालाय ॐ कटंकटाय ॐ कूष्मांडाय ॐ राजपुत्राय इति अथाचार्योग्न्यर्चना द्याज्यभागांतं कृत्वान्वरुणा मि
ताद्भ्य एवं जुहुयाद् यजमानस्तु पूर्ववत् त्यजेत् आचार्यः स्विष्टकृताद्भि प्राशितां विमोकांतं कर्म समापयेत् यजमा
नस्त्वभिषेकशालाया मिंद्रादि दश लोकपालेभ्यो नाम्ना दिक्षु विदिक्षु च वलीन् दद्यात् एतानि अग्निस्थापन चरुहो
म दिक्पाल बलिदानानि मितास्परामनु स्पृष्टोक्तानि ततो मिताय एष बलिर्न मम इति पायसेन माषभक्तेन वा मिताद्भ्यो
बलिं दत्वा विनायकाविकयो रथतः सकृद्वहतान् दुग्धान् आमं मांसेन तिलपिष्टेन वा मिश्रमोदने मत्स्यमांसं पक्वमपक्वं च गौ
डीं पैष्टीं माध्वीं इति त्रिविधा सुरा च ब्राह्मस्य मांसस्थाने मत्स्य वर्णापायसं सुरास्थाने मत्स्यवर्णां दुग्ध चित्र पुष्प सुरां धिद्रव्यं मृतोकं

शा॰ म॰ पृष्टिकाः अपूणः उडेरकस्रजः दध्यन्नं पायसं गुडमिश्रं तंडुलादिपिष्टं मोदकांश्च पात्रेसंस्थाप्यतत्सुरूपायविघ्नहे इति
८ मंत्रेणविनायकायशुभगायैविघ्नहे इतिमंत्रेणचांविकायैनिवेदयेत् अथाचार्योनूतनसूर्पेसर्वमुपहारशेषसं
स्थाप्य चतुष्पथेगत्वा तत्रगोमयेनोपलिप्यकुशानास्तीर्यतत्रसूर्पंप्राङ्मुखंसंस्थाप्ययेत् यजमानस्त्वेतैर्मंत्रैर्वलिंद
द्यात् वलिंगृह्णंत्विमंदेवाआदित्यावसवस्तथा मरुतोचाश्विनौरुद्राः सुपर्णाः पन्नगाग्रहाः १ असुरायातुधाना
श्चपिशाचाभात॰॰॰॰शाकिन्योयक्षवेतालाः योगिन्यः पूतनाः शिवाः २ जृंभकाःसिद्धगंधर्वाः नागाविद्याधरान
गाः दिक्पालालोकपालाश्चयेचविघ्नविनायकाः ३ जगच्छांतिकर्त्तारःब्रह्माद्याश्चमहर्षयः माविघ्नंमाचमेपापंमा
संतुपरिपंथिनः ४ सौम्याभवंतुतृप्ताश्चभूतप्रेताः सुखावहाः इतिदेवादित्यवसुमरुदश्विरुद्रसुपर्णपन्नगग्रहासु
रयातुधानपिशाचम॰॰रगशाकिनीयक्षवेतालयोगिनीपूतनाशिवजृंभकसिद्धगंधर्वनागविद्याधरनगदिक्पा
ललोकपालविघ्नविनायकजगच्छांतिकर्तृब्रह्मादिमहर्षिभूतप्रेतेभ्यइदंनममेतित्यागः ततः शिरसाभूमिंगत्वापु
ष्पपुनःपुनःसुरूपायेतिमंत्रेणविनायकायशुभगायइत्यंविकायैचदद्यात् ततोदूर्वासर्षपपुष्पाणांपूर्वोक्तविनायक
मंत्रेणविनायकायांजलिंदद्यात् अंविकायैतन्मंत्रेणतथैवदद्यात् ततोविनायकमंविकांचोपतिष्ठेत मंत्रस्तुरूपंदेहि

त्रिपशो देहि भगं भगवति देहि मे पुत्रान्देहि धनं देहि सर्वांकामांश्चदेहि मे १ अस्मिन भगं भगवन्देहि मे इत्यूह्य विना
यकमुपतिष्ठेत् अनंतरं यजमानः प्राङ्मुखोपविष्टः उद[illegible]नाचार्यादीन्पूजयित्वाचार्याय वासोयुग्मुरूपात्रं तिल
गव्यश्चान्यां यथाशक्ति दक्षिणां दद्यात् ततउतिष्ठ ब्रह्मण[illegible]त इत्यनेन यांतु देवगणा इत्यनेन वविनायकं मंविकां चो
पस्थापविसृज्य प्रतिमादि सर्वां सामग्रीमाचार्याय दद्यात् ततो यथाशक्ति भूयसीं दक्षिणां दीनानाथेभ्यो दत्वा यथाश
क्ति विना यकस्यी तोर्थं अंविकाप्रीतये च ब्राह्मणान्भोजयित्वा संकल्प्य वायसस्मृत्येत्युत्का न्यूनातिरिक्तं सर्वं संपूर्णं म
स्त्विति ता संप्रार्थ्य तैरनुज्ञातः सुहृद्युक्तो भुंजीत ॰ इति श्रीमत्शंकरभट्टसूनु भट्टनीलकंठकृतौ भास्करे शांति मयू
खे विनायकशांति पद्धतिः ॰ अथ ग्रहयज्ञः स्कांदे देवदानवगंधर्वा यक्षराक्षसकिन्नराः पीड्यंते ग्रहपीडाभिः किंपु
नर्भुवि मानवाः १ शनैश्चरेणसौदासो नरमांसे नियोजितः राहुणा पीडितो राजा नलो भ्रांतो महीतले २ अंगारकनि
रोधेन रामो राष्ट्रान्निवारितः अष्टमेन शशांकेन हिरण्यकशिपुर्हतः ३ रविणा सप्तमस्थेन रावणो विनिपातितः गुरु
णा जन्मसंस्थेन हतो राजा सुयोधनः ४ पांडवाः सौम्यपीडायां विकर्मणि नियोजिताः षष्ठेनोशनसायुद्धे हिरण्याक्षो
निपातितः ५ एते चान्ये च बहवो ग्रहदोषैः सुपीडिताः याज्ञवल्क्यः ग्रहाधीना नरेंद्राणामुच्छ्रायाः पतनानि च भावाभा

शा॰भ॰ वीचजगतस्तस्मात्पूज्यतमाग्रहाः १ अथयोगपारिजाते उत्पातस्य रिमले कार्यारंभेषु सर्वेषु प्रतिष्ठास्वध्वरेषु च नववेश्मप्रवेशे च ग
९ र्भाधानादिकर्मसु आरोग्यस्नानसमये संक्रांतौ रोगसंभवे २ अभिचारे चयः कुर्याद्ग्रहपूजां विधानतः सोभीष्टफललाभाय भूति
निर्विघ्नेन न संशयः इति याज्ञवल्क्यः श्रीकामः शांतिकामो वा ग्रहयज्ञं समाचरेत् वृष्ट्यायुःपुष्टिकामो वा तथैवाभिचर
न्नपि १ मात्स्ये ग्रहयज्ञास्त्रिधा प्रोक्ताः पुराणश्रुतिकोविदैः प्रथमायुतहोमस्स्याल्लक्षहोमस्ततः परं तृतीयः कोटिहो
मस्तु सर्वकामफलप्रदः ग्रहस्योत्तरपूर्वेण मंडपं कारयेद्बुधः रुद्रहस्तन भूमौ वा चतुरस्रमुदक्प्लवं १ दशहस्तमथा
ष्टौ वा हस्तान्कुर्याद्विधानतः तस्य द्वाराणि चत्वारि कर्तव्यानि विचक्षणैः २ स्कांदे नवग्रहमखे कुंडं हस्तमात्रं समं भवे
त् चतुरस्रमथो हस्तं योनिवक्त्रं समेखलं १ योनिरेव वक्त्रं यस्य तत् पुत्रादिकामनायां तु योन्याद्याकारा अपि भवेति चतु
रंगुलविस्तारा मेखला तद्वदुच्छ्रिता अत्र विशेषोपदेशादेकैव मेखला मात्स्ये वितस्तिमात्रा योनिः स्यात् षट्सप्तांगुल
विस्तृता कूर्मपृष्ठोन्नता मध्ये पार्श्वयोश्चांगुलोच्छ्रिता १ गजोष्ठसदृशी तद्वदायता छिद्रसंयुता मेखलोपरि सर्वत्र अश्व
त्थदलसन्निभा २ एकं कुंडं च मंडपे ऐशानभागे उदीच्यां वेति हेमाद्रिः अयुतादिहोमप्रकरणे विशिष्टस्तु कुंडं तन्मध्यभागे
तु कारयेच्चतुरस्रकं कुंडस्यैशानभागे तु पूजावेदीं प्रकल्पयेत् १ इत्याह अत्र चतुरस्रमित्यनेन क्षत्रियादिपुरस्कारेण वि

हिंतानामाकारविशेषाणां स्त्रीपुरस्कारेण विहितस्य योन्याकारस्य निवृत्तिः योनौ पुत्राः शुभं दलेद्वाभ्यं द्वस्ताग्राः काम्याः
स्त्वाकारा भवं स्येव वेषां विशेषमाह गोभिलः कुंडस्य प्रागुदीच्यां वा प्राच्यां मुत्तरतोपि वा चतुरस्रं चतुर्द्वारं कर्त्तव्यं ग्रहपी
ठकं १ श्रीकामः पूर्वतः कुर्यात्पुष्ट्यर्थं दक्षिणेन तु पश्चाद्विजन्मसिध्यर्थं शांत्यर्थं चोत्तरेण तु २ ईशान्यां सर्वकामाप्त्या
ग्नेयां तु भिचारके नैरृत्यां पुत्रलाभाय पुष्ट्यर्थं वापवेन तु ३ द्विनिर्वेदी तु स्थंडलं पक्षे कार्यो वशिष्टः त्रिरवेद ष्ट दले प
द्मवेदिको पोक्त कुले: अत्रैकाग्निब्रह्माचार्य पक्षमुक्त्वान्योन वसंख्याकुंडे षुततद्गुह्याकारांचाह प्रयोगपारिजाते भग
वान् मनोरमे भूमौ देशे होमशालामलंकृतां कृत्वा तु संवृतां प्राज्ञो ग्रहस्थानं प्रकल्पयेत् १ तन्मध्ये भास्करस्थानं भवेत्स
वोत्तरे बुधः पूर्वस्मिन्भागे वस्यामृ सोमो दक्षिणपूर्वके २ दक्षिणस्यां कुजस्थानं राहोर्दक्षिणपश्चिमे शनेस्तु पश्चिमे स्था
नं केतोरुत्तरपश्चिमे ३ उत्तरस्यां गुरोः स्थानं एवं वस्थंडिलं भवेत् स्थंडिलमध्ये भास्करस्य तु वृत्तं स्याच्चंद्रस्य चतुरस्र
कं ४ कुजस्य तु त्रिकोणं स्याद्वाणाकारं बुधस्य तु गुरोर्दीर्घचतुष्कोणं पंचकोणं सितस्य तु ५ चापाकारं शनि राहोः सूर्प
केतोर्ध्वजाकृतिः नवधा विभजेदग्निं श्रौतकर्मविधानतः ६ ऋत्विजश्च यथा योगं कुंडेषु ब्राह्मणाः पृथक् औं श्च स्थं
णं जुहुयात्सर्पपावकरुद्रकान् ७ ऋत्विजो जहु पुनर्बैश्रवेणैव पृथक् पृथक् अष्टौ च कलशान्गृह्य समारोपयेण

मग्निषु ८ प्रधानाग्नेर्विधायेमानित्थं होमं समाचरेदिति अथैव स्थंडिले भवेदि तस्मिन्नेन स्थंडिलानां कुंडानां च समस्त आका
रतो नोदितेषु निर्देशश्चोक्तः ब्राह्मणाः पृथग्गोत्र नैनेन नवाचार्या नव ब्राह्मणाश्चेत्युक्तं अत्रार्थ संक्षेपः प्रयोगपारिजा
ते मध्यकुंडे ऽग्निं प्रणीय ततो नवाचार्या अष्टसु कुंडेष्वग्निं प्रणीयाज्यभागांतं कार्दि समिद्भिर्गुडौदनादिभिर्विशे
राज्येन च ग्रहादिमंत्रैर्हुत्वा व्यस्त समस्त व्याहृतिभिश्च तिलान् हुत्वा स्विष्टकृतादिहोमशेषं कृत्वा पूर्णाहुतिं जुहु
युरिति कुंडसूत्रकारोक्तोदेशस्य चोत्तरपूर्वेण स्थंडिलं हस्तमात्रकं क्षिप्रं चतुरस्रं च वितस्त्युच्छ्रायसंमितं १ स्थंडिल
वेदिः प्रथमे स्थलमात्रस्य द्व्यंगुलोच्छ्रितो वप्रः प्रथमैः समुदाहृतः अंगुलोच्छ्रायसंयुक्तं वप्रद्वयमथोपरि १ द्व्यं
गुलस्तु द्वितीयोऽस्तु सैषाकथितावुधैः २ तत्र ग्रहान्नाह याज्ञवल्क्यः सूर्यः सोमो महीपुत्रः सोमपुत्रो बृहस्पतिः शु
क्रः शनैश्चरो राहुः केतुश्चेति ग्रहाः स्मृताः १ स्कांदे नवग्रहमखे कुर्याद् ऋत्विजश्चतुरः शुभान् अथवाप्येकमभ्यर्च्य विधि
ना ब्राह्मणा सह १ तथा नवग्रहमखे विप्राश्चत्वारो वेदवादिनः त्रिविधमपि नवग्रहमुपक्रम्य वशिष्टस्तु षोडशब्रा
ह्मणान् भुक्तान् दंभानृतविवर्जितान् तेषां मध्ये श्रेष्ठतमं आचार्यं तं प्रकल्पयेदिति १ अत्र पारिजातेन वाचार्याएको ब्र
ह्माष्टर्त्विजः आचार्येभ्यो नवभ्यश्च प्रहावेन फलं ततः इत्युक्तेः आचार्यकर्मएकं एव कुर्यात् पोरत्वन्वारंभमात्रे धेन्वा

घायहदक्षिणा अपितेभ्य एव देया इत्याद्युक्तं तदयुक्तं उपक्रमे एकाचार्येनवाचार्यसमुदाये प्राणवदुपदधातीतिवत् ॥
ल्लिंगसमवायमात्रेणानवभ्य इत्युपसंहारस्यपदोपपत्तेः उपक्रमेपि पद्यथाचार्यस्यसंस्कार्यत्वेनैकत्वमविवक्षितं न
थोप्या चार्यस्यभूतभाव्युपयोगाभावात्संस्कार्यत्वानुपपत्तेः वृत आचार्यः स्वकर्मकुर्यादितिकल्पितेवाक्यउपादेयत्वा
दाचार्यस्यभवत्येकत्वंविवक्षितं उपपादितंचेदमध्वर्युंवृणीतेहोतारंवृणीतेपुरोहितंवृणीत इत्यत्र मिश्रे जन्मभूमि
त्रमभिश्चैवग्रणाः स्थानमुखाभिनिवपोज्ञात्वाकुर्वीत शांतिग्रहास्तेनावमानिताः १ तत्रवर्णजन्मनी आह दामोदरीये च
ह्ययाराशारः रक्तः कश्यपजोभानुः शुक्लोब्रह्मसुतः शशीरक्तोरुद्रसुतोभौमः पीतः सोमसुतोबुधः १ पीतोब्राह्मः सुरा
चार्यः भुक्तः शुक्लोभृगूद्वहः कृष्णः शनीरवेःपुत्रः कृष्णोराहुःप्रजोषतेः २ कृष्णः केतुः कृशानूत्थः कृष्णापापाल्पयो
धर्मी ३ स्कांदे उत्पन्नोर्कः कलिंगेषु यमुनायां च चंद्रमाः अंगारकस्त्ववंत्यां मागधायां हिमांशुजः सैंधवेषु गुरुर्जा
तः भुक्तोभोजकटे तथा शनैश्चरस्तु सौराष्ट्रे राहुर्वैरादिनापुरे अंतर्वेद्यां तथा केतुरित्येताग्रहभूमयः १ यस्यपस्य च यद्ग
त्रं तस्य क्षाम्यतः परं आदित्यः काश्यपयोगोत्रे आत्रेयश्चंद्रमा भवेत् १ भारद्वाजोभवेद्भौमस्तथात्रेयश्च सोमजः आंगि
रसोगुरुर्गोत्रः भुक्तोवैभार्गवस्तथा २ शनिःकाश्यपस्त्वत्र राहुः पैठीनसिस्तथा केतवोजैमिनीयाश्च ग्रहाभिन्नः कुलोद्भवाः

कैर्नैरख्यो इत्येतत्यक्षपोर्मंडलाद्याकारतेति हेमाद्रिः तत्रैवभुक्ताकौंप्राङ्मुखोदुङ्गेयोगुरुसौम्यावुदङ्मुखौ प्रत्यङ्मुखः॥ शनिः सोमः शेषादक्षिणतोमुखाः १ इदं च भुक्तादीनां प्राङ्मुखत्वात् आदित्याभिमुखाः सर्वइतिमात्स्योक्तादित्याभिमु खत्वेन विकल्पते यत्तु हेमाद्रि विकल्पपरिजिहीर्षया प्राङ्मुखावूर्ध्वदृष्टी उदङ्मुखोवामदृष्टीप्रत्यङ्मुखोधोदृष्टिः द क्षिणेते सुखाः दक्षिणदृष्टयः इतिव्याचष्ट तत्रमूलंचिंत्यं विरोधवत्तादृश्यं च वर्णरूपगुणोपेतान् मात्स्यावाहा॥ येनु तोम मात्स्ये ... हि विप्रकथितेतेकृत्वा ब्राह्मणवाचनं अग्निप्रणयनं कृत्वा वेद्यामावाहयेत्सुरान् १ देवानां तत्र सं स्थाप्याधिदेवाविदिशस्थिकौ आदित्याभिमुखाः सर्वे साधिप्रत्यधिदेवताः २ विष्णुधर्मोत्तरे अतः परं प्रवक्ष्यामि योदेवो यो ग्रहः स्मृतः अग्निरर्कः स्मृतः सोमोवरुणाः परिकीर्तितः १ अंगारकः कुमारश्च बुधश्च भगवान् हरिः बृहस्पतिः स्म तः शक्रः शुक्रोदेवी च पार्वती २ प्रजापतिः शनिश्चैव राहुर्ज्ञेयोगणाधिपः विश्वकर्मा स्मृतः केतुर्येग्रहास्ते सुराः स्मृताः ३ अत एव ... दिलिंगकामंत्राः सूर्यादिस्थापनउक्ताः स्कांदे अग्निंदूतं दिनेशाय सूर्यायाप्सु तद्वत्पि स्योनापृथिवीभौ मायइदं विष्णुर्बुधाय च १ इंद्र आ मा सु रेज्योतिः सिताय च प्रजापतेतिसौराय आयंगौरीति राहवे २ केतवे ब्रह्मजज्ञानं खे खे मंत्रैः प्रतिष्ठिताः एतेषां चैव मंत्राणामात्स्यावाहयेदुरान् इदुस्तुताभिर्व्यात्द्रतिभिराबाहने विकल्पः मदनरत्नवा

ण्यापसुक्तं २

ग्रो॰ म॰ हनं स्थापनयोर्भेदाख्यातु तिभिरावाहनं एतैर्मंत्रैः स्थापनीमी पूर्वे पारिजाते वामनस्तु प्रणवं त्वादितः कृत्वा भूर्भुवः स्वः न
१२ मेः पूर्वं चतुर्थ्यंतनामसंपुटं नमस्कारांतयोजितं १ एष मंत्रः समाख्यातो ग्रहपूजाविधायकः अनेनावाहनं कुर्यादनेनैव
विसर्जनं संग्रहे अत्र आवाहनवाक्येषु विशेषमाह बौधायनः किरीटिनं पद्मासनं पद्मकरं पद्मगर्भसमद्युतिं सप्ता
श्वं सप्तरज्जुं कलिंगदेशजं काश्यपगोत्रं विश्वामित्रार्षं त्रिष्टुप्छंदसं रक्तांबरधरं रक्ताभरणभूषितं रक्तगंधानुलेपनं र
क्तछत्रध्वजपताकोपशोभितं मुकुटकेयूरमणिशोभितं आरुह्य रथं दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमंडलं प्रविष्टमधि
देवताभिः सहितं प्रत्यधिदेवतेश्वरसहितं रक्तवृत्तमंडले पूर्वमुखमादित्यमावाहयामि १ किरीटिनं रक्तमाल्यांबरं रक्त
शूलगदाधरं चतुर्भुजं मेषगमनमवंतिदेशजं वासिष्ठगोत्रजं जमदग्न्यार्षं जगतीछंदसं रक्तांबरधरं रक्ताभरणभूषितं र
माल्यानुलेपनं रक्तछत्रध्वजपताकिनं मुकुटकेयूरमणिशोभि मध्यदले न्यग्रेषु क्रमान्यसेत् इंद्रादिलोकपालांश्च तत्तन्मंत्रैः
प्रपूजयेत् १ विनायकं तथा दुर्गां वायुमाकाशमेव च आवाहयेद्ग्रहात्तिभिस्तथैवाश्विकुमारकौ २ एते च विनायकाद्याः
पंचग्रहेभ्य उत्तरतः स्थाप्याः इति सांप्रदायिकाः दक्षिणपश्चिमवायव्योत्तरपूर्वेषु यथाक्रममित्यन्ये एद्रमंदद्विनेशानांउ
त्तरस्यां यथाक्रमं गणेशो दुर्गा वायुश्च राहुकेत्वोश्च पश्चिमे १ आकाशमश्विनौ चेति पंचैतान्स्थापयेद्बुधः इति संग्रहानुसा

रेखोत्ति पितामहश्चरणाः रूपनाशयणाश्च स्कांदे उत्तरे शनिसूर्याभ्यां गुरुकेतोश्च दक्षिणे गणाधिपं प्रतिष्ठाप्य सर्वदेवनम
स्कृतं १ रविशनिकेतूगुरूणां मध्य इति फलितोर्थः विनायकपदमुपलक्षणं तेन दुर्गादयोप्यत्रैव स्थाप्या इति केचित् चं
दनादिनियमस्तत्रैव दिवाकरकुजाभ्यां हि दापयेद्रक्तचंदनं चंद्रे च भार्गवे चैव सितवर्णं प्रदापयेत् १ कुंकुमेन तु संयुक्तं
चंदनं जीवसौम्ययोः अगरुं चंदनं दद्याद्राहुकेत्वर्कजेषु च २ ग्रहवर्णानि पुष्पाणि गायत्र्या धूपमाद्दहेत् रवेः कुंदुरु
कं धूपं शशिनस्तु घृताक्षताः ३ भौमे सर्ज्जरसं चैव अगरुं च बुधे स्मृतं सिल्हकं गुरवे दद्याच्छुक्रे विल्वागुरुस्तथा ४ गु
ग्गुलं मंदराहुभ्यां लाक्षामहौषं केतवे ५ कुंदुरुकः सल्लकीनिर्यासः सिल्हकं सिल्हा इति मध्यदेशे प्रसिद्धं विल्वागुरुम
विल्वफलनिर्यासः सहितः गुग्गुः मंदचारः शनिः उदीप्यस्वेति मंत्रेण दीपं दद्यात्ततः द्विजः विहितगंधधूपानामसंभवे तु पा
तवल्कयः पेयामि ५ किरीटिनं पीतवर्णं चतुर्भुजं दंडिनं वरदं साक्षसूत्रकमंडलुं सिंधुदेशजमांगिरसगोत्रं वागीशं शर्षे अनु
च्छत्रं दंडं पीतांबरधरं पीताभरणभूषितं पीतपीतगंधानुलेपनं पीतछत्रध्वजपताकिनं मुकुटकेयूरम
णिशोभितं मारुह्य रथं दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमंडले प्रविष्टमधिदेवतेंद्रसहितं प्रत्यधिदेवताब्रह्मसहितं पीत
दीर्घचतुरस्रमंडले उदङ्मुखं गुरुमावाहयामि ६ किरीटिनं भिंद्रनीलसमद्युतिं शूलधरं वरदं गृध्रवाहनं सवाणवाणास

शां०म नधरं सौराष्ट्रदेशजं काश्यपगोत्रजं भृग्वार्षं गायत्रीछंदसं कृष्णांबरधरं कृष्णाभरणभूषितं कृष्णगंधानुलेपनं कृष्णछत्रध्व
२३ जपताकिनं मुकुटकेयूरमणिशोभितं मारुह्यरथं दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमंडले प्रविष्टमधिदेवता प्रजापतिस
हितं प्रत्यधिदेवता यमसहितं कृष्णधनुर्मंडले प्रत्यङ्मुखं शनैश्चरमावाहयामि ७ किरीटेनकरालवदनं खड्गचर्मशू
लधरं सिंहासनस्थं पूर्वदेशजं पैठीनसिगोत्रं मांगिरसार्षं मनुष्टुप्छंदसं कृष्णांबरधरं कृष्णाभरणभूषितं कृष्णगंधानुलेप
नं कृष्णछत्रं ध्वजपताकिनं मुकुटकेयूरमणिशोभितं मारुह्यरथं दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमंडले प्रविष्टमधिदेव
तासर्पसहितं प्रत्यधिदेवता कालसहितं कृष्णशूर्पमंडले दक्षिणामुखं राहुमावाहयामि ८ धूम्रान्द्विबाहून्पाशधरा
न्विकृताननान् गृध्रवाहनान् किरीटिनो मध्यदेशजान् जैमिनिगोत्रजान् गौतमार्षान् मानाछंदसः चित्रांबरधरान् चि
त्राभरणभूषितान् चित्रगंधानुलेपनान् कृष्णपिंगध्वजपताकिनो मुकुटकेयूरमणिशोभितानारुह्यरथं दिव्यं मेरुं प्रदक्षि
णीकुर्वाणान् ग्रहमंडले प्रविष्टान् अधिदेवता ब्रह्मसहितान् प्रत्यधिदेवता चित्रगुप्तसहितान् कृष्णपिंगध्वजमंडले
दक्षिणाभिमुखान् केतून् आवाहयामि ९ स्कांदे ईश्वरं भास्करे विंघादुमां विघान्निशाकरे स्कंदमंगारके विंघाद्बुधे नारायणं
विदुः ब्रह्मावेदनिधिं विंघाद्गुरौ शक्रो विधीयते शनैश्चरे यमं विघाद्राहौ कालं तथैव च २ चित्रगुप्तोधिपः केतोरित्येते

ग्रहदेवताः ३ वेदनिधिर्ब्रह्मा तत्रैव वक्ष्ये स्थानानि देवानामीश्वरादि यथाक्रमं सूर्य्यस्यैवोत्तरे शंभुमुमां सोमस्य दक्षिणे १
स्कंदमंगारकस्यैव दक्षिणस्यां निवेशयेत् सौम्यात्पश्चिमतो विष्णुं ब्रह्माजीवस्य पूर्वतः २ इंद्रमैंद्र्यां सिताद्धि छिमंदादाग्नेय
तोयमं राहोः पूर्वोत्तरे कालं सर्वभूतभयावहं ३ केतोर्नैर्ऋतदिग्भागे चित्रगुप्तं निधापयेत् ३ स्कांदे अतस्थापनमंत्राश्च
कथयाम्यनुपूर्वशः ईश्वरं त्र्यंबकं चेति श्रीश्चैतेचेति पार्वती १ यदक्रंदेति च स्कंदं विष्णुर्विष्णोरराडिति आब्रह्ममिति ब्र
ह्माणं मे जीवेद्रुतिर्वा सर्व २ यमाय त्वेति च यमं कालं कालकार्षेति मंत्रतः चित्रावसविति मंत्रेण चित्रगुप्तं निधापयेत् ३
अग्निरापः क्षितिर्विष्णुरिंद्रश्चेंद्री प्रजापतिः सर्पा ब्रह्मा च निर्दिष्टा अधिदेवा यथाक्रमं ४ अग्निं दूतमिति त्वग्ने र्वरुणस्य उद्
त्तमं स्योना पृथिवी मेदिन्या इदं विष्णुस्तु विस्तवे ५ इंद्रायेंदो इतींद्रस्योत्तानपर्णेश विस्थितौ प्रजापते प्रजेशस्य एष ब्रह्म
तिर्वै विधिः ६ मंत्रो नमोस्तु सर्पेभ्यः सर्पाणां स्थापने मतः ग्रहदेवाधिदेवानां नैवेद्यं कुसुमानि च ७ स्वहव स्वासनं दानं स्था
पनं चानुपूर्वशः अत्र सूर्यादयो ग्रहा ईश्वरादयो देवाः आग्न्यादयोधिदेवाः तत्रेश्वरादि देवानां सूर्यस्यैवोत्तरे शंभुमित्या
दिना पूर्वस्थलान्युक्तानि अग्न्याद्यधिदेवास्तु ग्रहदेवयोर्मध्ये स्थाप्याः तथा च मरनरत्नेगो भेलवशिष्ठे ग्रहदेवतयो
र्मध्ये अधिदेवान्निधापयेत् तत्रैव संग्रहेतु ईश्वरादयो देवा अधिदेवतात्वेन व्यवहृता आग्न्यादयस्तु प्रत्यधिदेवतात्वेन ते

शां॰प्र॰ मास्यान्तरं चोक्तं अधिदेवा दक्षिणतो वामे प्रत्यधिदेवताः स्थापनीयाः अपत्नेन व्याहृतीभिः पृथक् पृथक् १ तत्रैव वक्ष्यसि शोये
२४ तु देवतानां स्थानान्तरं क्वचिन्मन्त्रान्तरं चोक्तं रुद्रन्त्र्यंबकमन्त्रेणार्वेऽन्तरतोन्यसेत् सोमस्याग्नेयदिग्भागे श्रीश्वतेऽजेन कात्मजो
यदक्षं देति भौमस्य स्कंदं यास्य प्रदापयेत् विष्णुं विष्णोरराटे तु यजेत्पूर्वे बुधस्य तु २ गुरोरुत्तरतोऽभ्यर्च्यो ब्रह्माब्रह्मेति मन्त्रतः
सजोषेंद्रेति शुक्रस्य प्राच्यां शक्रं निधापयेत् ३ शनेः पश्चिमतास्थाप्यो प्रजापतेस्त्वं चायमः कार्षिरसीति मंत्रेण राहोः का
लं तथोत्तरे ४ चित्रगुप्तं तु केतूनां चित्रावसेति नैर्ऋते ग्रहाश्च देवताख्याताः पृथुपातोऽधिदेवताः ५ अग्निरापोधरा वि
ष्णुरिंद्रैंद्राणी प्रजापतिः सर्पाब्रह्मा च निर्दिष्टा अधिदेवा यथाक्रमं ६ ग्रहदेवतयोर्मध्ये अधिदेवान्निवेशयेत् एतानि च वा
शिष्टीयवृन्तासिकैश्चिन्त्यादिम त्तेपारिजातेपद्मप्राग्दलमारत मारुह्य रथं दिव्यं मेरुं प्रदक्षिणी कुर्वाणां ग्रहमंडले प्रविष्टम
धिदेवता भूमिसहितं प्रत्यधिदेवतास्कंदसहितं त्रिकोणारकमंडले दक्षिणामुखमंगारकमावाहयामि २ किरीटिनं श्वे
तवर्णं चतुर्भुजं दंडिनं वरदं कांस्यं साक्षसूत्रकमंडलुं कीकटदेशजं भार्गवगोत्रजं शौनकार्षेयपतिं छन्दसं श्वेतांबरधरं श्वेता
भरणभूषितं गंधानुलेपनं श्वेतच्छत्रध्वजपताकिनं मकुटकेयूरमणिशोभितं मारुह्य रथं दिव्यं मेरुं प्रदक्षिणी कुर्वाणां ग्र
हमंडलप्रविष्टमधिदेवतेंद्राणी सहितं प्रत्यधिदेवेंद्रसहितं शुक्रं पंचकोणमंडले प्राङ्मुखं भगवंतं शुक्रमावाहयामि ३

किरीटिनं श्वेतांवरधरं दशाश्वं श्वेतभूषणां पाशपाणिं द्विबाहुं यमुनादेशजं मत्रिगोत्रमात्रेयार्षमनुष्टुप्छंदसं श्वेतांवरध
रं श्वेताभरणभूषितं श्वेतगंधानुलेपनं श्वेतछत्रध्वजपताकिनं मुकुटकेयूरमणिशोभितमारुह्यरथं दिव्यमेरुं प्रदक्षिणी
कुर्वाणंग्रहमंडलंप्रविष्टमधिदेवतापसहितंप्रत्यधिदेवतोमासहितं चतुरस्रमंडलं प्रत्यङ्मुखं सोममावाहयामि ४
किरीटिनं पीतमाल्यांवरधरं पीतवर्णं कर्णिकारसमद्युतिं खड्गचर्मगदापाणिं सिंहस्थं वरदं मगधदेशजं मत्रिगोत्रजं भा
रद्वाजार्षं जगतीछंदसं पीतांबरधरं पीताभरणभूषितं पीतगंधानुलेपनं पीतछत्रध्वजपताकिनं मुकुटकेयूरमणि
शोभितमारुह्यरथं दिव्यमेरुं प्रदक्षिणीकुर्वाणं ग्रहमंडले प्रविष्टमधिदेवताविष्णुसहितं प्रत्यधिदेवताविष्णुसहितं
पीतवाणमंडले दक्षिणमुखं बुधमावाहयावर्णाः प्रदेयानि वासांसि कुसुमानि च गंधाश्च वलयश्चैव धूपो देयश्च गुग्गुलुः
१ स्कांदे गुडोदनं रवेदद्यात्सोमाय घृतपायसं लोहिताय हविष्यान्नं बुधाय क्षीरषाष्टिकं १ दध्योदनं गुरोर्दद्याच्छुक्राय
च घृतोदनं मिश्रितं तिलमाषैश्च नैवेद्यं च शनैश्चरे २ राहोर्मांसौदनं दद्यात्केतोश्चित्रौदनं तथा चित्रोदने तिलतंदुलम
भिश्रं स्यादजाक्षीरं च शोणितं कर्णनासागृहीतस्यादेतच्चित्रौदनं स्मृतमिति द्यामोदरः १ एतेरेव द्रव्यैर्ब्राह्मणा अपि भो
ज्या अन्यथा वपात्तवल्क्यः गुडोदनं हविष्यपायसं च क्षीरषाष्टिकं दध्योदनं हविश्चूर्णं मांसं चित्रान्नमेव च दद्याद्ग्रहक्रमादे

शां॰म निर्लिप्येभ्योभोजनंबुधः २ शक्तितोवायथालाभंसंतुष्टस्यविधिपूर्वकं ३ तद्विशेषःउपचाराणांसर्वेषामपिसुलभात्वतेःसदा
३१ गंधाभावेशुल्कगंधपुष्पाभावेसुगंधकं १ धूपाभावेगुग्गुलःस्याद्द्रव्याभावेतुमिश्रकं पंचामृतंगवामेवमिश्रवर्णिकदाचने
ति मात्स्येमहागुत्तरेणात्तस्माच्चदध्यक्षतविभूषितं चूतपल्लवसंयुक्तंफलवस्त्रयुगान्वितं १ पंचरत्नसमायुक्तंपंचभंगयुतं
तथा स्थापयेदव्रणांकुंभंवरुणंतत्रविन्यसेत् २ गंगाद्याःसरितःसर्वाःसमुद्राश्चसरांसिच गजाश्वरथ्यावल्मीकासंग
माद्ध्रदगोकुलात् ३ मृदमानीयविप्रेंद्रसर्वौषधिसमन्वितं स्नानार्थंविन्यसेत्तत्रयजमानस्यधर्मवित् ४ याज्ञवल्क्यः
अर्कःपलाशःखदिरअपामार्गोथपिप्पलः उदुंवरःशमीदूर्वाकुशाश्चसमिधःक्रमात् १ ईश्वरादिदेवानांस्वस्वग्र
हसमिद्भिरेवहोमः हेमाद्रौदेवीपुराणे गणाधिपतयेदेयाप्रथमातुवराहुतिः अन्यथाविफलंविप्रसर्वमीहनसंशयइति
१ आप्लावनःजुहुयात्समिदन्नाज्येनाभिक्रमिर्यथाक्रममिति समित्तुविशेषमाह याज्ञवल्क्यःहोतव्यामधुसर्पिर्भ्यां
दध्नाक्षीरेणवायुताइतिनचात्रसंप्रतिपन्नदेवताकानेकद्रव्याणामेकैवाहुतिःसान्नाय्यवदितिवाच्यं आदौतुसमि
दन्नाज्यैपृथगष्टोत्तरशतमितिवाशिष्टात् अन्यत्रापिसंप्रतिपन्नदेवताकेस्मार्तेकर्मण्यपनेकद्रव्यकेपृथगेवहोमइ
तिसांप्रदायिकाःवहुस्रुकर्मसुप्रापोवचनान्यप्येवंस्कांदे आप्लवनेनसहस्रांशोरिमंदेवातथैंदवे अग्निर्मूर्द्धेतिभौमा

पउद्बुध्यस्वबुधायच १ बृहस्पतेतिचगुरोः शुक्रायान्नात्परिस्रुतः शनैश्चरस्यमंत्रोयंशन्नोदेवीरुदाहृतः २ कयानइति
राहोश्चकेतुंकृण्वन्नस्तुकेतवे ३ नात्स्य आवोराजेति रुद्रस्यवलिहोमंसमाचरेत् आपोहिष्ठेत्युमायास्तुस्योनेति
स्वाभिन्नकृणया १ विष्णोरिदंविष्णुरितित्वमित्स्येतिस्वयंभुवः इंद्रमिद्देवतातयइतींद्रस्यप्रकीर्तितः २ तथायमस्यव
यगौरीरितिहोमः प्रकीर्तितः कालस्यब्रह्मयज्ञानमितिमंत्रः प्रकीर्तितः ३ चित्रगुप्तस्यचाज्ञातमितिपोयगाशिकाविदुः
अग्निंदूतंवृणीमहेइतिवन्हेरुदाहृतः ४ उदुत्तमंवरुणेति आपांमंत्रः प्रकीर्तितः भूमेः पृथिव्यांतरिक्षमितिवेदेषु
पठ्यते ५ सहस्रशीर्षापुरुषइतिविष्णोरुदाहृतः इंद्रायेंद्रोमरुत्वतइतिशक्रस्य शस्यते ६ उत्तानपर्णेशुभगेइतिशच्या
समाचरेत् प्रजापतेः पुनर्होमंप्रजापतइतिस्मृतः ७ नमोस्तुसर्पेभ्यइति सर्पाणांमंत्रउच्यते एषब्रह्मापत्रंक्त्विज इ
तिब्रह्मणसुदाहृतः ८ विनायकस्यचानूनइतिमंत्रोबुधैः स्मृतः जातवेदसेसुनवामदुर्गामंत्रोत्रउच्यते ९ पूर्णाइति
चमूर्धानंदिवइत्यभिपातयेत् १० स्कांदेनैवेयशेषं हुत्वाचहोमंमंत्रादनंतरं अथाव्याहृतिभिर्हुत्वा एकैकस्यपया
क्रमं १ अष्टोत्तरंचसाहस्रंशतमष्टाधिकंतथा अष्टाविंशतिरष्टौवाएकैकस्यतुहोमयेत् २ होतव्यंचघृतंतत्रचरुंल
क्षाहुतिकंपुनः मंत्रैर्दशाहुतिर्हुत्वाहोमोव्याहृतिभिःस्मृतः ३ अथैवं अपचेत्स्वर्थः गृहीत्वातामथोविकोमितिवत्स

शां॰ म॰ दनमपि यवैस्सैव यथापाठः तत्तन्मंत्राणामाहुतीनांच परस्परं विकल्पः अष्टोत्तरसहस्रादि संख्यातु पक्षद्वयेपि नैव व्या
२६ शेषहोमनुशाखाविशेषप इत्यपि स एव लक्षादिकः पुनर्व्याहृतिभिर्होमो मंत्रैर्दशाहुतीर्हुत्वा स्मृत इत्यन्वयः मंत्रै
र्ग्रहमंत्रैर्व्याहृतिभिर्व्यस्ताभिः समस्ताभिश्च ताश्चतस्रस्तु अथव्याहृतिभिर्हुत्वेति पृथग्वाक्यं एकैकस्यै तु प्रतिदैव
तं मष्टादिसंख्यान्वयार्थं एकैकस्य तु होमयेदित्येके कपदं तु चर्वादिद्रव्यपरं न देवतापरं अस्मिन्नेव होमे घृतचरुवि
धिः सैव लक्षादिक इत्येतत्तु अथव्याहृतिभिर्हुत्वेति विहिते होमे लक्षादिसंख्याविध्यर्थं मंत्रैरित्यादि तु चरुहोमोत्तरं
सोमेराजेति मंत्रेण यथाप्रकृति स्विष्टकृद्धुत्वा सूर्यादिमंत्रैर्दशाहुतिः प्रतिदैवतं लक्षहोमादिद्रव्येणाहुत्वा व्याहृ
तिभिर्लक्षादिहोमः कार्य इत्याहुः पवाद्यन्यतमद्रव्येणाग्न्याहादिभ्यः प्रत्येकं दशाहुतीस्तत्तन्मंत्रैर्हुत्वा तेनैव द्रव्येण व्यस्त
समस्तव्याहृतिभिः पुनर्लक्षं कोट्यन्यतमसंख्यया जुहुयादिति हेमाद्रिमदनौ तानि च द्रव्याणि देवीपुराणे यवव्रीहि
घृतक्षीरतिलकंगुप्रसातिकाः पंकजोशीरबिल्वार्कदला होमे प्रकीर्तिताः १ उदङ्मुखाः प्राङ्मुखा वा कुर्युर्ब्राह्मणपुंब्रा
ह्मणापुंगवाः मंत्रवंतश्च कर्तव्याः चरवः प्रतिदैवतं २ हुत्वा च तांश्चरून्सम्यक्ततो होमं समारभेत् ३ चर्वादिकं चरु
ताक्कं च होतव्यं होतव्यं च घृताभ्यक्तं च चरुभक्ष्यादिकं पुनरिति मात्स्यात् भक्ष्यं द्राक्षादि चरुर्नैवेद्यशिष्टो गुडोदनादिः ता

निद्धआर प्युत्ववादस्येतानि हवींषि स्युः समित्संख्यासमाहुती रिस्याश्वलायनोक्तेः अधिदेवतादिभ्योपि होमो हेमाद्रौ व
पात्वसमिद्भिश्च सर्पिषा च तिलैः क्रमात् तत्तन्मंत्रैश्च होतव्याः क्रमाद् आधिदेवताः १ गृह्यपरिशिष्टे प्रधानदशांशेनषा
र्वेपोद्रैन्यैरिति अधिदेवतादिहोमे संख्याविशिष्टे द्वित्राश्चे वाधिदेवसायंवानां देव पंचधेति द्वित्राः पंचपंचानां
ग्रहौनां पंचधाप्रत्येकमित्यर्थः केचित्तु हौत्रपोवा द्वित्राः विनायकादीनां पंचधा एकैकामिति केचित् प्रयोगपा
रिजाते इंद्रादिलोकपालांश्च तत्तन्मंत्रैः प्रपूजयेत् तत्तन्मंत्रैः जपं कुर्यात् ततो होमं समारभेत् १ नृसिंहपुराणे न तोय
स्तुतिभिर्पश्चाज्जुहुयाच्च तिलादिकं यावत्स्यात् संपूर्णते संख्यालक्षं वा कोटिरेव वा १ वाशब्दादयुतमपि ग्रहयज्ञश्च नियम
तकालीनः स्वेच्छायज्ञः स उच्यत इति भविष्योत्तरात् ततो मातृस्तुतिभिः कुर्यात्तिलहोमं प्रयत्नतः प्रथमोपुत्रहोमस्या
त्लक्षहोमो द्वितीयकः १ तृतीयः कोटिहोमः स्यात्त्रिविधो ग्रहयज्ञकः एकरात्रं त्रिरात्रं वा पंचरात्रमथापि वा र शिवगा
र्यो विष्णुगार्थ्यः शांतिब्राह्मणभोजनं समापयेत् प्रतिदिनं एवं भक्तिसमन्वित इति वा शिष्टेष्वेकात्रादि ग्रहणं ति पमा
नीदरार्थं स्यत्रमूकाद्विजपोपितुलादानवदिति केचित् वाशिष्ठे अपामभिषेकमंत्रेण वाद्यमंगलगीतकैः पूर्णकुं
भेन तेनैव होमांते प्राग्दुदङ्मुखैः १ अव्यंगावयवैर्ब्रह्मन् हेमस्रग्दामभूषितैः यजमानस्य कर्तव्यं चतुर्भिः स्नापनं द्वि

शां·म· लैः ॥ अभिषेकमंत्राः प्रयोगवक्ष्यंते वशिष्ठः स्वस्तिकं कल्पयेत्सम्यगाकुंडस्यैशानभागतः ३ यजमानाभिषेकार्थं तत्र
१७ भद्रासनं न्यसेत् प्राङ्मुखस्योपविष्टस्य यजमानस्य तत्र च ४ अभिषेकं ततः कुर्युः साचार्याः षोडशर्त्विजः विविधैर्मंग
लैर्घोषैः सूतमागधवंदिजैः सह ५ ततस्तस्याभिषिक्तस्य रक्षार्थं बलिमुत्क्षिपेत् दिग्विदिक्षु विचित्रान्नैर्दीपैर्नीराजये
ततः शुक्लमाल्यांबरधरः शुक्लगंधानुलेपनः १ ततो मंडलमागत्य ध्यायेदग्निं ग्रहान्गुरून् प्रत्येकं प्रतिमंत्रैश्च दद्यात्सु
धांजलिं ततः २ इति वामनः आचार्यप्रभृतिभ्यश्च ग्रहार्चनफलं ततः समिदाज्यचरूणां च तिलहोमफलं च यत् १
ब्रह्मत्वे कुंभपूजायां चार्चनस्य फलं च यत् गणपक्षेत्रपाश्रीशादुर्गादेव्यंगदेवताः २ तासां जपफलं सम्यक्गृह्णीयाज
लपूर्वकं एतानि च वामनवचांसि निर्मूलानि इति पितामहचरणाः वशिष्ठगोभिलवचसामपि केचिदाहुः वशिष्ठः
ततो जयादीन् जुहुयात् पूर्णाहुतिमथाचरेत् तत्रैव मंत्रेणासमन्ते अग्न इति पूर्णाहुतिं चरेत् अग्निपुराणे मूर्द्धानं
दिवमंत्रेणैशिन्यश्च वरेण च धारया दद्यादुत्थाप पूर्णां वै नोपविश्य कदाचन इति मत्स्ये पूर्णाहुतिं च मूर्द्धानं दिव इत्यभियातये
त अन्ये भिन्नशाखागते कादशाद्वादशाकपाले भेदेर्ये आग्नेय कवदनेकमंत्रयुक्ता या अनेकस्मृत्युक्ता या अभियुक्ता
हुतिरेकतान्मंत्राणां विकल्पः उपांशुयाजइव शाखाभेदभिन्नानां याज्यानुवाक्यानां समुच्चयेन तु यतेति वसोर्द्धारालपुर

होमेनास्ति प्रमाणाभावात् ततः शुक्लांबरधरः शुक्लगंधानुलेपनः सर्वौषधैः सर्वगंधैः स्नापितो वेदपुंगवैः १ यजमानः
सपत्नीकः ऋत्विजः स्नान्समाहितः दक्षिणाभिः प्रयत्नेन पूजयेद्गतविस्मयः २ सूर्याय कपिलां धेनुं दद्याच्छंखं तथेंदवे
रक्तं धुरंधरं दद्याद्भौमाय ककुदाधिकं ३ बुधाय जातरूपं तु गुरवे पीतवाससी श्वेताश्वं दैत्यगुरवे कृष्णां गामर्कसूनवे ४
आयसं राहवे दद्यात्केतवे छागमुत्तमं सुवर्णेन समा कार्या यजमानेन दक्षिणा ५ बुधप्रीत्यर्थदेयहेम्ना सह सर्वा मूल्य
तः समा इति केचित् अस्मिन्पक्षे षोडशमाषविशिष्टहेमवाचि सुवर्णपदासामंजस्यापत्तेः सादशसुवर्णमूल्याः प्रत्ये
कमिति परे वस्तुतस्त्वमूल्येषु तथा हेमापि देयं यथा सर्वाः प्रत्येकं दशमाषसुवर्णेन समा भवंतीति तु सम्यक् सर्वेषामप्य
वाप्तौ गुरुर्वा येन तुष्यति स्वमंत्रेण प्रदातव्याः सर्वाः सर्वत्र दक्षिणाः १ स्कांदे केतवे छागमांसानि सर्वेषामेव कांच
नमिति तत्रैव यस्तु पीडाकरो नित्यं स्वल्पवित्तस्य वा ग्रहः तमेव पूजयेद्भक्त्या दक्षिणाभिः स्वशक्तितः १ दानोद्योते भ
आश्वलायनः यथाशक्ति ततो विप्रान् ऋत्विजश्चेतरानपि एकमेकाहुतौ विप्रं होमे तत्त्वेन भोजयेत् १ असमर्थो म
समाश्चाभिविप्रमेकं प्राताहुतौ सहस्रस्य हुतेर्वैकं जघन्यो विप्रभोजयेत् २ तत्रैव तस्माद्दातुमशक्तोऽपि दक्षिणां
चान्ह्वैवाजपैः प्रणामैः स्तोत्रैश्च स्तोषयेत्तर्पयेद्गुरुं ३ स्कांदे ये यो ग्रहो द्विजस्ताद्विद्धि धिष्ण्यो वेदपारगः तोषयन्नृ

द्रुवस्त्राद्यैस्तुष्टमेनं विसर्जयेत् १ अन्नहीनो दहेद्राष्ट्रं मंत्रहीनस्तु ऋत्विजः यजमानमदक्षिणो नास्ति यज्ञसमो रि
पुः २ तत्रैव प्रयासमन्वितं पत्रयंत्रेण प्रतिहन्यते एवं समुच्छ्रितं घोरं शीघ्रं शान्त्या विनश्यति १ अहिंसकस्य दान्तस्य
धर्मार्जितधनस्य च नित्यं च नियमस्थस्य सदा सानुग्रहा ग्रहाः २ ग्रहा गावो नरेन्द्राश्च ब्राह्मणाश्च विशेषतः पूजि
ताः पूजयन्त्येते निर्दहन्त्यवमानिताः ३ ग्रहाणामिदमातिथ्यं कुर्यात्संवत्सरादपि आरोग्यबलसंपन्नो जीवेच्च शर
दां शतं ४ मात्स्ये एवं समग्रान्निध्याय सर्वान्देवान्विसर्जयेत् तत्र मंत्रः यान्तु देवगणाः सर्वे पूजामादाय पार्थिवीं इ
ष्टकामप्रदानार्थं पुनरागमनाय च १ भविष्योत्तरे ततः समाप्ते यज्ञे तु कारयेत्तु महोत्सवं शंखतूर्यनिनादेन ब्रह्मघो
षरवेण च १ मात्स्ये अनेन विधिना यस्तु ग्रहपूजां समारभेत् सर्वान्कामानवाप्नोति प्रेत्य स्वर्गे महीयते १ सदैवायुत
होमोयं नवग्रहमखः स्मृतः विवाहोत्सवयज्ञेषु प्रतिष्ठादिषु कर्मसु २ निर्विघ्नार्थं मुनिश्रेष्ठ तथोद्वेगाद्भुतेषु च वश्या
कर्षाभिचारादौ तथैवोच्चाटनादिके ३ नवग्रहमखं कृत्वा ततः काम्यं समारभेत् अन्यथा फलदं पुंसां न काम्यं जायते
क्वचित् ४ तस्मादयुतहोमस्य विधानं तु समारभेत् ४ विवाहेत्यादिना च विवाहादिषु काम्येषु च कर्मस्वगतत्वमुक्तं आ
ज्यग्रहस्य स्वरूपवर्णदेशगोत्राग्निस्थानमुखाकारस्थापनहोममंत्रचंदनधूपनैवेद्यसमिद्दक्षिणाधिदेवताप्रत्यधिदेव

तापत्याधिदैवतोपदेशकवाक्येषु ग्रहाणां स्वरूपनिर्देशस्थापनहोममन्त्रोपदेशकवाक्येषु चाधिदेवताविनायकादि
पंचलोकपालानामनेकस्मृतिपुराणभेदेन भूयो विसंवादादिभिरनेकैः पर्यायशब्दैः रूपस्थितेर्नैकैव शब्दनियमः ना
पि मंत्रवर्णे नैकशब्दोपस्थितिः शब्दविशेषे देवता अनृतस्तत्स्मारकतया मंत्रविनियोगेन मंत्राणां देवताप्रापकत्वायो
गात् तेषां बाहुल्येनास्पष्टलिंगत्वाच्च अतोऽदृष्टार्थादिषु स्वरूपादिनिर्देशकस्मृतिमंत्रवर्णोपस्थितिशब्दानामन्यतमे
न शब्देनोद्देशो ग्रहाणामिति शिष्टाचारोऽप्येवं अतस्मार्तनिकरणेषु तु होमे ऽग्निवायुसूर्यप्रजापतयः पञ्च देवताः न ग्रहा
ण्याधिदैवतप्रकाशकत्वेन विनियोगाभावात् अत एव पारिजाते ॐ भूर्भुवः स्वश्चेति तिस्रो व्याहृतयो जपेत् अभिश्च हो
मे तिस्रभिश्च तूष्णीं स्यात् समास्तत इति समस्ताभिरेव होमः स चाग्निवायुसूर्यदैवत्य इति तु मदनः सर्वथाऽत इति होमे न ग्रहा
णां देवता इति प्रधानं चात्र ग्रहपूजा तद्धोमो ऽयुतहोमादिश्च 'श्रीकामः शान्तिकामो वा ग्रहयज्ञं समाचरेत् इत्यादिना तत्पू
जातद्धोमयोः फलसंबंधात् ग्रहयज्ञविधेः सुत्कामप्रथमो ऽयुतहोम इत्यादिना ऽयुतलक्षकोटिहोमानां ग्रहयज्ञविशेषत्वेनो
पक्रमात् तस्मादयुतहोमस्य विधाने तु समाचरेदित्युपसंहाराच्च ग्रहाग्रहदैवत्यकर्मसमूहे प्राणभृत उपदधातीतिव
ल्लिंगं समवायेन ग्रहमन्त्रशब्दः ता तच्च रणास्त्वयुतहोमादिनामेव प्राधान्यं ग्रहहोमस्त्वंगमित्याहुः तदाशयं न जाने यो हि

ग्रं॰ म कामशब्देनफलसंबंधः श्रीकामः शांतिकामोवाग्रहयज्ञंसमाचरेदित्यादिः सतावद्ग्रहपूजाहोमयोरेवोचितः ग्रहसंबंधप्र
१९ तीतेर्ग्रहयज्ञशब्दस्यतन्नामत्वात् नचायुतहोमादीनांफलसंबंधेतत्प्रकरणापाठात् ग्रहपूजाहोमयोरंगत्वेतिवाच्यंवैपरी
त्वात् अयुतहोमादिशब्दानांग्रहयज्ञसमानाधिकरण्येन ग्रहयज्ञनामत्वंतुलिंगसमवायेन नतदंगत्वेन आर्थवादि
कः फलसंबंधस्तु अनेनविधिनायस्तुग्रहपूजांसमाचरेत् सर्वान्कामानवाप्नोतिप्रेत्यस्वर्गेमहीयते इत्ययजदेवपू
जासंगतिकरणदानेष्विति अनुशिष्टयोः पूजाहोमयोः सदैवायुतहोमोयमित्याद्युपक्रम्यनिर्विघ्नार्थंमुनिश्रेष्ठइत्या
दिनात्वयुतहोमादीनामपिस्मृतिषुनुप्रायः आर्थवादिकमेवफलं अत्रकामशब्दोपनीतेफलेसत्यार्थवादिकंसंबध्यते
नवेतिनुविचारांतरं किंच याज्ञवल्क्यादिस्मृतिषुनतावदयुतहोमादीनांविधिर्नाप्यनुवादः अतोग्रहपूजाहोमयोःप्र
धान्यमात्वेतत्रत्येतिकर्तव्यतासंबंधोनस्यात् अतोग्रहपूजाहोमयोरपिप्राधान्यंभाति अत्रएवंकश्चित्केवलग्रहमखेषु
तदंगकेषुचशांतिकादिकर्मस्वेकस्मृत्युक्तांगप्रधानादेरास्मृत्यंतरोक्तप्रधानभूतायुतादिहोमंविनापिशास्त्रत्वात्तरोक्त
ग्रहयागांतराभ्यासांतरविनैकशास्त्रीयग्रहयागाभ्यासमात्राणामिवपूजाग्रहदेवत्यहोमयोरेवानुष्ठानंकथंचित्शिष्ट
नांसंमच्छते ग्रहपूजाहोमयोरंगत्वेत्वंगमात्रानुष्ठानमेवस्यात् अथग्रहादीनांलक्षणानि मात्स्ये पद्मासनःपद्मकरःप

मगर्भसमद्युतिः सप्ताश्वरथसंस्थश्च द्विभुजः स्यात्सदा रविः १ श्वेतः श्वेतांबरधरो दशाश्वः श्वेतभूषणः गदापाणिर्द्विबाहु
श्च कर्तव्यो वरदः शशी २ रक्तमाल्यांबरधरः शक्तिशूलगदाधरः चतुर्भुजो मेषगमो वरदः स्याद्धरासुतः ३ पीतमाल्यांबर
धरः कर्णिकारसमद्युतिः खड्गचर्मगदापाणिः सिंहस्थो वरदो बुधः ४ देवदैत्यगुरू तद्वत्पीतश्वेतौ चतुर्भुजौ दंडिनौ व
रदौ कार्यौ साक्षसूत्रकमंडलू ५ इंद्रनीलद्युतिः शूलवरदो गृध्रवाहनः बाणबाणासनधरः कर्तव्योर्कसुतः सदा ६ करा
लवदनः खड्गचर्मशूली वरप्रदः नीलः सिंहासनस्थश्च राहुरत्र प्रशस्यते ७ धूम्रा द्विबाहवः सर्वे गदिनो विकृताननाः गृ
ध्रासनगता नित्यं केतवः स्युर्वरप्रदाः ८ सर्वे किरीटिनः कार्या ग्रहा लोकहितावहाः अंगुलेनोछ्रिताः कार्याः शतमष्टो
त्तरं सदेति ९ अथाधिदेवताप्रत्यधिदेवतालक्षणानि विशुधर्मोत्तरे पंचवक्त्रो वृषारूढः प्रतिवक्त्रं त्रिलोचनः कपालशूल
खट्वांगी चंद्रमौलिः सदा शिवः १ अक्षसूत्रं च कमलं दर्पणं च कमंडलुं उमा बिभर्ति हस्तेषु पूजिता त्रिदशैरपि २ कु
मारः षण्मुखः कार्यः शिखंडकविभूषणः रक्तांबरधरो देवो मयूरवरवाहनः ३ कुक्कुटश्च तथा घंटा तस्य दक्षिणहस्त
योः पताका वैजयंती स्याच्छक्तिः स्यात्तस्य वामयोः ४ विष्णुः कौमोदकी पद्मशंखचक्रधरः क्रमात् प्रदक्षिणं दक्षिणाध
करादारभ्य नित्यशः ५ पद्मासनस्थो जटिलो ब्रह्मा कार्यश्चतुर्भुजः अक्षमालां स्रुवं बिभ्रत्पुस्तकं च कमंडलुं ६ चतुर्दंतगा

शां·म जारूढोवज्रीकुलिशभृत्करः प्राचीपतिःप्रकर्तव्योनानाभरणभूषितः ७ ईषन्नीलोधनश्चकार्योदंडहस्तोविजाननतार
२० ताद्दकपाशहस्तश्चमहामहिषवाहनः ८ कालःकरालवदनोनीलांगश्चविभीषणः पाशहस्तोदंडधरःकार्योरृक्षिक
रोमवान् ९ अपीच्यवेषस्त्वाकारोद्विभुजंसौम्यदर्शनं दक्षिणेलेखनीचित्रगुप्तंवामेतुपात्रकं १० पिंगल श्मश्रुके
शाक्षः पीनागजरुरोरुयाः छागस्थः साक्षसूत्रोग्निःसप्तार्चिः शक्तिधारकः ११ चिन्हितंचामरेणास्यकरमन्यंप्रकल्पा
येत् आपस्त्रीरूपधारिण्यः श्वेतामकरवाहनाः १२ दधानाःपाशकलशौमुक्ताभरणभूषिताः शुक्लवर्णामहीका
र्यादिव्याभरणभूषिता १३ चतुर्भुजासौम्यवपुश्चंडांशुसदृशांवरा रत्नपात्रंसस्यपात्रंपात्रमौषधिसंयुतं १४ पद्मक
रेचकर्त्तव्यंभुवोयाद्रवनंदनदिग्गजानांचतुर्णांसाकार्याप्रष्ठगतातथा १५ विष्णोरिंद्रस्यचोक्तंवामेशच्याःकरेकार्यासे
व्यासंतानमंजरी वरदामंडिताकार्याद्विभुजाचतथाशची १६ यज्ञोपवीतीहंसस्थएकवक्त्रश्चतुर्भुजः असेस्त्रुवंस्त्रुवं
बिभ्रत्कुंडिकांचप्रजापतिः १७ अंसअक्षमालांकुंडिकाकमंडलु अक्षसूत्रधराःसर्पाकुंडिकाउछ्भूषणाःएक
भोगास्त्रिभोगाश्चसर्वेकार्याविभीषणाः १८ अथलक्षणमुक्तं ग्रहाणांदक्षिणेपार्श्वेस्थाप्येदधिदेवताः ग्रहाणामुत्तरे
पार्श्वेन्यसेत्प्रत्यधिदेवता १९ अथविनायकादिलक्षणानि चतुर्भुजस्त्रिनेत्रश्चकर्तव्योत्रगजाननः नागयज्ञोपवीत

अथ शांकरवतरोश्वरः १ दक्षेदंतंकरे दद्याद्वितीयेचाक्षसूत्रकं तृतीयेपरशुंदद्याच्चतुर्थेमोदकंतथा २ शक्तिवारणतप
शूलंखड्गंचक्रंवदक्षिणे चंद्रविंबमधोवामेखेटमूर्द्धकपालकं ३ मुकुटकंचविभ्राणासिंहारूढानुदिग्भुजाएषादेवो
समुद्दिष्टादुर्गादुर्गार्तिहारिणी ४ धावद्धरिणपृष्ठस्थोध्वजधारीसमीरणः वादानकर्णेधूम्रवर्णाःकार्योविज्ञानतां ५
नलोस्यलम्बगगनं तद्वर्णावरधारिच चंद्रार्कहस्तकर्तव्यद्विभुजंसौम्यखड्वत् ६ द्विभुजैरविमिथजौकर्तव्यौरूप
संस्थितौ तयोरोषधयःकार्यादिव्यादक्षिणहस्तयोः ७ वामयोःपुस्तकौकार्यौदर्शनीयौतथाद्विजाःएकस्यदक्षिणे
पार्श्वेदामेवान्यस्ययादव ८ नारीयुगंप्रकर्तव्यमुरूपंचारुदर्शनं रत्नभांडकरेकार्येचंद्रभुक्तावरेतथा ९ अथलोकपा
लस्त्याणि तत्रेंद्राप्रियमरूपाणपधिप्रत्यधिदेवतोतयोकानि खड्गाचर्मधरोवालोनिर्ऋतिर्नरवाहनः ऊर्ध्वकेशोवि
रूपाक्षः करालःकालिकाप्रियः १ नागपाशधरोरक्तभूषणःपद्मिनीप्रियःवरुणोवपतिःस्वर्णावर्णोमकरवाहनः
२ वायुर्विनायकादिपंचकेउक्तःसोमोग्रहेषु अनंतःसर्पःसमस्ताधिदेवतासुदर्शयुतहोमः अथसलक्षहोमः तत्रेग्र
हस्थीठादौनिनिमितास्सुक्तान्ययुजहोमारंभेदेवीपुराणेपि लक्षहोमंप्रवक्ष्यामिथथाप्रोक्तंतुशंभुना भूमिकंपेदिशा
दाहे पहयुद्धउपस्थिते १ केतुसंदर्शनेचैव आदित्यस्यचकंपने कल्लवर्णायवासूर्येतथाछिद्रसमन्विते २ रक्तवृष्टिस्त

ग्रं·म थानयोर्विपरीतावहंतिच निर्गतेगगनादूमेवारिमध्येचणस्थितं ३ उपसर्गास्तथालोकेदोतुक्षयकारकाः पस्यराशौः
२१ यहाः पंच अथसप्तसुराधिप ४ ग्रहणांचंद्रसूर्यस्यग्रहैर्वाष्टमसंस्थितैरित्यादितथाकंपनस्वेदनंगात्रे अंबुपानार्थज
ल्पनं ५ देवतानांसुराध्यक्षउत्पाताःक्षयकारकाः लक्षहोमंप्रकुर्वीतकोटिहोममथापिवेति ६ मात्स्ये अस्माद्दशगुणः
प्रोक्तोलक्षहोमःस्वयंभुवा आहुतीभिःप्रयत्नेनदक्षिणाभिस्तथैवच ७ द्विहस्तविस्तृतंतद्वच्चतुर्हस्तायतंपुनः लक्षहो
मेभवेत्कुंडयानिवच्चत्रिमेखलं ८ व्यासतोद्विहस्तंविस्तृतंफलतश्चतुर्हस्तायतंभवतीत्यर्थः तथा तस्यचोत्तरपूर्वेणवित
स्तित्रयसंमितंप्रागुदक्प्रवणंतद्वच्चतुरस्रंसमंततः १ त्रिसंभाद्गोच्छ्रितंप्रोक्तंस्थंडिलंविश्वकर्मणा संस्थापनायदेवानांव
प्रत्रयसमावृतं २ तस्मिंस्तावाहयेद्देवान्पूर्ववत्पुष्पतंडुलैः गरुत्मानधिकस्तत्रसंपूज्यश्रियमिच्छता ३ सामध्वनिशरीरस्त्वं
वाहनंपरमेष्ठिनः विषपापहरोनित्यमतः शांतिंप्रयच्छमे ४ अयंगरुडवाहनमंत्रः पूर्ववत्कुंभमामंत्र्यतद्वद्धोमंसमाचरेत्
सहस्राणांशतंहुत्वासमित्संख्यादिकंपुनः १ पूर्ववद्देवसमिदाज्यचरुहोमंपूर्वोक्तैरेवमंत्रैःकुर्यात् गरुत्मनस्तुसुपर्णोसि
गरुत्मांत्रिवृत्तेशिरइत्यमित्रमितिवामंत्रः घृतकुंभवसोर्द्धारांपातयेदनलोपरि उदुंबरीमथार्द्रांचऋज्वीकोटरवर्जितां १ बाहु
मात्रास्रुचंकृत्वा ततःस्तंभद्वयोपरि घृतधारांतयासम्यगग्नेरुपरिपातयेत् २ स्रावयेत्सूक्तमाग्नेयंवैष्णवंरुद्रमैंदवं महावै

भानरेसम्यक्श्रेष्ठसामचयाठदेत् ३ स्नानेनवयजमानस्यपूर्ववत्स्वस्तिवाचनं दातव्यायजमानेनपूर्ववद्दक्षिणापृथक् ४
कामक्रोधविहीनेनऋत्विग्भ्यः शांतचेतसा तद्दद्याद्दशचाष्टौवालक्षहोमेपिऋत्विज् ५ कर्तव्याश्चतुरस्तद्वच्चतुरोवाविम
त्सराः ब्रह्माचार्यसहितानामेवेयंसंस्थेतिकेचित् ६ नवग्रहमखःसर्वेलक्षहोमेदशोत्तरं दद्याच्चमुनिशार्दूलभूषणान्य
पिशक्तितः १ शेषाणिवस्त्राणिहेमानिकटकानिचकर्णांगुलीयपवित्राणिकंठसूत्राणिशक्तितः २ नकुर्याद्दक्षिणा
हीनंवित्तशाठ्येनमानवः अदत्वालोभमोहाद्वाकुलक्षयमवाप्नुयात् ३ अन्नदानंयथाशक्त्यादातव्यंभूतिमिच्छताअ
न्नहीनमध्वरीयस्मादुर्भिक्षफलदोभवेत् ४ तस्मात्पीडांकरोतीवयएवभवतिग्रहः तमेवपूजयेद्भक्त्याद्वौवात्रीन्वायथा
विधिः ५ तथापूज्यंतेत्रिदिवलोकेचवस्वादित्यमरुद्गणाः यावत्कल्पशतान्यष्टौ अंतेमोक्षमवाप्नुयात् ६ यथापुत्रार्थी
लभतेपुत्रंधनार्थीलभतेधनं भार्यार्थीलभतेभार्यांकुमारीलभतेपतिं ७ भ्रष्टराज्यस्तथाराज्यंश्रीकामःश्रियमाप्नुया
त् यंयंप्रार्थयतेकामंतंतंप्राप्नोतिपुष्कलं ८ निष्कामःकुरुतेयस्तुपरंब्रह्मसगच्छति इतिलक्षहोमः अथकोटिहोमः
तत्राप्ययुतहोमलक्षहोमप्रकरणएवनिमित्तान्युक्तानि भविष्योत्तरेपि संवरणाद्वाच भगवन्महदुत्पातसंभवेभू
प्रकंपने निर्घातेयास्तुवर्षेचग्रहभंगेतथैवच १ जन्मनक्षत्रपीडासुअनावृष्टिभयेषुच क्रूरेषुग्रहपीडासुदुर्भिक्षेरा

शा म दूर्विद्धूरे स्वाधीनासंभवे जाते शरीरे चातिपीडिते क्लेशे महति चोत्पन्ने किं कर्तव्यं नरोत्तमैः ३ स्वर्गस्य साधनं यत्तत्की
२ र्तिदं धनदं तथा प्रब्रूहि त्वं द्विजश्रेष्ठ तथारोग्यप्रदं नृणां ४ सनत्कुमार उवाच शृणु राजन्प्रवक्ष्यामि शांतिकर्मण्यनुत्तमं
कोटिहोमाख्यमतुलं सर्वकामफलप्रदं ५ ब्रह्महत्यादिपापानि येन नश्यंति तत्क्षणात् उत्पाताः प्रशमं यांति महत्स्व
प्यथ ते सुखं ६ विधानं तस्य वक्ष्यामि शृणुष्वैकमना भव देवागारे च भवने तीर्थे वा शिवसन्निधौ ७ पर्वते वाथ कुर्वीत
अनुकूले क्षमे मात्मनः शुभनक्षत्रयोगे च वारे सर्वगुणान्विते ८ यजमानस्यानुकूले कोटिहोमं समारभेत् पूजयित्वा प्र
यत्नेन ब्राह्मणान्वेदपारगान् ९ वस्त्रैर्विभूषणैश्चैव गंधमाल्यानुलेपनैः प्रणम्य विधिवत्तेभ्यो चात्मानं विनिवेदयेत् १०
त्वमेव ततः पिता माता त्वं गतिस्त्वं परायणं त्वत्प्रसादेन विप्रेषं सर्वमेस्यात्मनोगतं आपद्विमोक्षाय च मे कुरु यज्ञमनुत्तमं
कोटिहोमाख्यमतुलं शांत्यर्थं सार्वकामिकं १२ पुरोहितस्ततः प्रातः शुक्लांबरधरः शुचिः ब्राह्मणैः संवृतः पुरोपः स
यतः सुसमाहितैः १३ भूमिभागे समे शुद्धे प्रागुदक्प्रवणे तथा पुण्याहं वाचयेत्पूर्वं कृत्वा विप्रांस्तु भोजयेत् १४ ततः
समाहितो विप्रैः सूत्रयेन्मंडपं शुभं उत्तमं शतहस्तं तु तदर्धेन तु मध्यमं १५ अधमं तु तदर्द्धेन शक्तिकालाद्यपेक्षया म
ध्ये तु मंडपस्याथ कुंडं कुर्याद्विचक्षणः १६ अष्टहस्तप्रमाणेन आयामेन तथैव च मेखलात्रितयं तस्य द्वादशांगुलविस्त

को॰म॰ चास्यंनृपपावकं मुखानितस्यचत्वारिसप्तजिह्वानिपार्थिवः ३३ एकजिव्हमथैकंतुनत्स्कुलं सार्वकामिकं धूमायमानेनद
२.५ थाहोतव्यंज्वलितेनले ३४ ऋग्भिः पूर्वमुखेकार्योयजुर्भिश्चोत्तरामुखैः सामभिःपश्चि[illegible]कार्यः पूर्ववद्दक्षिणामुखैः ३५ अ
थत्रावाज्यभागौतुपूर्वंहुत्वाविचक्षणाः परितश्चपरिस्तीर्णेकल्पितेचतथासने ३६ [illegible]णाः पूर्वमेवंतुसर्वंपश्चात्समाच
रेत् होमोमात्वेतिभिश्चैवसर्वत्रविधीयते ३७ प्रणवादिभिश्चतद्दिव्यैः स्वाहाकारांतयोजितैः जुहुयात्सर्वदेवानांवेधायै
च्छ[illegible]आहुताः ३८ एवंप्रकल्पयेयज्ञंकोटिहोमाख्यमुत्तमं तिलाः कृष्णाघृताभ्यक्ताः किंचिद्व्रीहिसमन्विताः ३९ किंचि
घृतेसमाप्तेता[illegible]इतिकचित्पाठः होतव्याः कोटिहोमेतुसमिधः सुपलाशजाः ४० पूर्णापूर्णेसहस्रेतुदद्यात्पूर्णाहु
तिंशुभां पंचमेतत्वतु[illegible]राजन्सार्वकामार्थसिद्धये ४१ पूर्णाहुत्यः समाख्याताः कोटिहोमेनराधिप सहस्राणिनृपश्रेष्ठदश
शास्त्रविशारदैः ४२ प्रारंभदिनमारभ्यब्राह्मणेर्ब्रह्मवादिभिः होतव्यंयजमानेश्च अथवासुपुरोहितैः ४३ क्रोधाल्लोभादयो
दोषावर्ज्जनीयाः प्रयत्नतः यजमानेनराजेंद्रसर्वकामानभीप्सता ४४ मात्स्ये अस्माच्छतगुणाःप्रोक्तः कोटिहोमः स्वयंभु
वा आहुतीभिःप्रयत्नेनदक्षिणाभिःफलेनच ४५ पूर्ववद्ग्रहदेवानामावाहनविसर्ज्जनं होममंत्रास्तएवोक्ताः स्नानदा
नेतथैवच ४६ कुंडमंडपवेदीनांविशेषोयंनिबोधमे कोटिहोमेचतुर्हस्तंचतुरस्रंचसर्वतः ४७ योनिवक्त्रद्वयोपेतंतदथाहु

त्रिमेखलं १८ सर्वेशश्चतुर्हस्तमितिविस्तारायामखातेष्वित्यर्थः योनिवक्त्रद्वयोपेतमिति एकायोनिः पश्चिमतोन्यादक्षिणाः
द्वित्रिहेमाद्रिस्त्र्यश्रकंठः योनिकंठयुतमितिपितामहचरणाः वेदोच्चकोटिहोमेस्याद्भिन्नस्तोनां चतुष्पं चतुरस्रासमातद्वत्रि
भिर्वेष्टैः समावृताः १ वप्रप्रमाणप्रोक्तंवेवेदिकाणामतयोछ्रयः २ उक्तमयुतहोमे तथाषोडशहस्तः स्यात्मंडपश्च चतुर्मुखः पू
र्वद्वारे च संस्थाप्य ऋग्वेदपारगं १ याजुर्वेदं तथा याम्ये पश्चिमे सामवेदिनं अथर्ववेदिनं तद्वदुत्तरे स्थापयेद्बुधः २ अष्टौ
तुलोमकाः कार्या वेदवेदांगवेदिनः एवं द्वादश तान्विप्रान् स्त्रमाल्यानुलेपनैः ३ पूर्ववत्पूजयेद्भक्त्या सर्वाभरणभूषितैः शा
न्तिसूक्तं च रौद्रं च पवमानं सुमंगलं ४ पूर्वतो बह्वृचः शांतिं पठेनासत्वुदङ्मुखः शाक्रं रौद्रं च सौम्यं च कौष्मांडं शांतिमेव
च ५ पठेत्तु दक्षिणे द्वारि याजुर्वैदिकमुत्तमं सौपर्णमथ वैराजं आग्नेयं रौद्रसंहितां ६ ज्येष्ठसाम तथा शांतिं छंदोगः पश्चि
मे पठेत् ७ शांतिसूक्तं च सौरं च तथा शाकुनकं शुभं पौष्टिकं च महाराजमुत्तरेणाथर्ववित् ८ पंचभिस्तैः स्वयं होमः
कार्योत्र पूर्ववत् स्नाने दाने च मंत्राः स्युस्त एव मुनिसत्तमः ९ वसोर्धाराविधानं तु लक्षहोमवदिष्यते अनेन विधिना य
स्तु कोटिहोमं समाचरेत् १० सर्वान्कामानवाप्नोति ततो विष्णुपदं व्रजेत् यः पठेच्छृणुयाद्वापि ग्रहशांतिं च यो नरः ११ सर्वपा
पविशुद्धात्मा पदमैंद्रस्य गच्छति अश्वमेधसहस्राणि दश चाष्टौ च धर्मवित् १२ कृत्वा यत्फलमाप्नोति कोटिहोमाद्दशस्तु

ते बहूनां हुताशानां सहस्राणि भूरिणा हुतशालुदानि वनश्चेति कोटिहोमेन य ... भाषिते इति कोटिहोमः अथ शतमुख
कोटिहोमः सवरणउवाच बहुत्वात्कर्मणो ब्रह्मन् कोटिहोमः सुदुष्करः कालेन महता चैव कर्तुं शक्यः कथंचन १ मिय
माब्रह्मचर्याद्याहृष्करा इति मे मतिः निरोधो ब्राह्मणानां च भूरिशाय्यादि सुदुष्करः २ का... कालेनाल्पीयसा त्वग्निः कालाद्यपेक्ष्य
एतद्विज्ञाय तं ब्रह्मन्सर्वशास्त्रेषु पठ्यते ३ कोटिहोमस्य संक्षेपं वद मे ब्रह्मन् संभव ४ सनत्कुमारउवाच शताननो दशमु
खो द्विमुखैकमुखास्तथा चतुर्विधो महाराज कोटिहोमो विधीयते ५ कार्यं यगुरुत्वं ज्ञात्वानेकघमघ... यथासंक्षेपतः
कार्यः कोटिहोमस्य कः शृणु ६ कृत्वा कुंडशतं दिव्यं पूर्वमाग्नसंमितं एकैकस्मिंस्तथा कुंडे दश विप्रान्नियोजयेत् ७ स
घः पक्षे तु विप्राणां सहस्रं परिकीर्तितं एकस्थानप्रणीते ग्नौ सर्वतः परिभाविते ८ एकस्थानात्सर्वतः सर्वस्मिन्कुंडे परि
भाविते संस्कृते ग्नौ प्रणीते तु स्वयं होमं कुर्युर्द्विजाः सर्वे कुंडे कुंडे यथोदितं यथा कुंडबहुत्वेपि राजन्स्यैन्महानलौ १ नवा
प्यग्निबहुत्वं स्यान्न च यज्ञोपि भिद्यते तथा कुंडशतेप्यत्र घृताचिर्विधिनियोजिते २ एक एव भवेद्यज्ञः कोटिहोमो न संशयः
एवं यः क्रियते क्षिप्रं व्याकुलैः कार्यगौरवात् ३ शताननः स विज्ञेयः कोटिहोमो न संशयः स्वल्पैर्होमिभिः कार्यः स्याद्दीर्घका
लादिकेपि वा ४ द्वादशमुखः कार्यः कोटिहोमः शुभे मते विप्राणां द्विशते तत्र प्रविभज्य नियोजयेत् ५ तेपि विज्ञातशीला

स्युःत्वनवंतोजितेंद्रियाः यत्रकुंडद्वयंकृत्वाविभज्यचविभावसुं ६ होमंकुर्युर्द्विजाभूयःसंस्कृत्यविधिपूर्वकं शतंतत्रनियोज्यंच
विप्राणांप्राणांप्रविभज्यवै ७ मासेनवाद्विमासेवाकार्यकालेद्युपस्थिते तदापिद्विमुखःकार्योकोटिहोमोविचक्षणैः तदानु
स्वेच्छयायत्नयजमानःसमापयेत् कालेनवहुधाराजंस्तदाचैकमुखोभवेत् ९ एककुंडस्थितोवन्हिरेकचित्तैःसमाहितैःय
यालाभस्थितेविप्रैर्ज्ञानशीलैर्विचक्षणैः १० नसंख्यानियमश्चात्रव्राह्मणानांनरोत्तम नकालनियमश्चैव स्वेच्छायत्नःसउच्य
ते ११ आहृत्याकर्तुकामस्यचातुर्मास्यादिकर्मवत् तदाप्यशक्तःकर्तव्योयज्ञोयंसार्वकामिकः १२ अयमेकमुखोराजन्कालेन
वहुताभवेत् वहुविघ्नश्चकालोवैतस्मात्संक्षेपमाचरेत् १३ यतोवैवित्तमायुश्चचित्तंचैवास्थिरंसदा अतःसंक्षेपतःकार्य
धर्मकार्यंप्रशस्यते १४ ततःसमाप्तेयज्ञेतुकारयेत्तुमहोत्सवं शंखतूर्यनिनादेनव्रह्मघोषरवेणवा ततस्तुदक्षयेद्विप्रान्त्वि
जःश्रद्धयान्वितः एकैकंकनकंश्चैवकुंडलैर्विविधैर्नृप १६ गोशतंचैवदातव्यमश्वानांचशतंतथा सहस्रंसुवर्णस्यसव
र्वाण्यपिदापयेत् १७ ग्रामैर्गजैरथैरश्वैःपूजयेच्चपुरोहितं दीनांधकृपणान्सर्वान्वस्त्रान्नैश्चापिपूजयेत् १८ ततश्चावभृथःस्ना
पात्तेघंटैःपूर्वकल्पितैः लक्षहोमात्कमंत्रेणसदाविजयकारिणा ११ एवंसमापयेद्यस्तुकोटिहोममखंशुभं तस्याराज्यंप्रिया
पुत्राआयुर्वृद्धिस्तथैवच २० सर्वपापक्षयश्चैवजायतेनृपसत्तम अनावृष्टिभयंचैव उत्पातभयमेवच २१ दुर्भिक्षश्चैवपीडा

यां·भ· च भशांसंयांतिभूतले एतत्सुराणं पापहरं सर्वकामफलप्रदं २२ सनत्कुमारमुनिना पार्थिवाय निवेदितं सर्वोपसर्गशमनं भव
२५ नाशनं वायेकारयेति मनुजान्नृप कोटिहोमं भोगानवाप्य मनसोभिमतान्प्रकामं ते यांति शांकरभवनं भुवि शुद्धसत्वाः २३ अत्र प
थेतेसाहस्राः सारस्त्राइत्येक सप्तयोपक्रांत्रेषु क्रमान्नातेषु च निकोपिसंज्ञकेषु यागेषु प्रथमस्याम्नात द्धर्मकस्य धर्मा उत्तरेष्वना
म्नातधर्मकेषु निकायिष्वावांतरसामान्यात्सहस्रसाधस्यायेकनामकत्वाच्च प्रवर्तंत इत्यष्टमे निकायिनां तु पूर्वोत्तरेषु प्रवृत्तिः
स्यादित्यवनिरूपणाप्रितयेह चतुर्विधो महाराजकोटिहोम इति चतुर्णां कोटिहोमत्वावांतरसामान्येनाम्नातधर्मस्यैकमुख
स्य धर्मा अनाम्नातधर्मकेषु द्विमुखादिषु प्रवर्तंते नेनतेषों विकृतित्व तत्र द्विमुखे तावत्कुंडद्वयप्रकृतिभासेसु शतपंचविंशति
हस्तमंडपेपुमध्यमं नवमासेकार्यं तस्यैवमध्यमेनवमांसेचेकुंड कुर्याद्विचक्षण इति प्रकृतौ वचनेनात्रापि तथा प्राप्तेः तच्च कुं
डद्वयषट्स्तदत्रालक्षमिते होमेषट्करं संप्रवक्ष्यत इति भविष्यत्पुराणात् पंचहस्तं वा पंचकरं प्रोक्तं दशलक्षाहुतौ क्रमादिति तत्रां
तरावच्च दशलक्षोत्तरमेकोनकोटिपर्यंतं पंचषट्करो इत्यर्थः एकहस्तत्वमयुतहोमीयप्राकृतपरिमाणत्वद्ध्यार्थत्वापत्याप्राकृ
तकार्यत्वाद्बाध्यते अर्थात्परिमाणमिति कात्यायनोक्तेश्च तत्र पंचविंशतिहस्तमंडपेमध्यनवांशे दक्षिणोत्तरयोः कुंडद्वयं नि
विशंतेकथंचित्प्रकृतितो द्वादशांगुलमेखलाप्राप्तेः इतरयोस्तुमंडपयोः सुगम एवनिवेश एवं दशमुखेपिप्राकृतैकहस्तत्वा

धेनपञ्चकराशिषट्कराशिवादशकुंडानि तेषुप्रत्येकंदशलक्षाआहुतयः तत्रपंचविंशतिहस्तेमंडपेमध्यमांशेपूर्वादिषु
चतुर्दिक्षुमध्यसंलग्नानिचत्वारिकुंडानि प्राकृतमध्यमासाधिकारणात्वस्यपावत्सम्भवमनुग्रहस्यप्यलात् प्राचिनवमांसेतु
प्राकृतीचतुःकरावेदीसमस्तशेषुषट्कुंडानियःकश्चिद्देकोंशस्तुरितएव कुंडद्वयंमध्यमांसे अष्टस्वंशेषु अष्टाविंसपि
केचित् शतमुखेपियंचविंशतिहस्तेतावन्मंडपेशतकुंडानिवेशोवाधितएव पंचाशद्धस्तेयद्यपिसंभवतितथापिसहस्र
विभागाणांसुखेननिवेशोवाधितः अतःशतहस्तएवनिवेशउच्यतेतत्रमध्यमांसेप्राग्भागेउदकसंस्थाप्यपंचानामेकापंक्तिः ते
षांचकुंडानांप्रत्येकमंतरंसार्द्धसप्तहस्ताः चत्वार्यंगुलानिच ततःप्रतीच्यामेतादृशमेवान्यत्पंक्तित्रयंकार्यंपंक्तिः तेषांचकुं
डानांप्रत्येकमंतरंसार्द्धसप्तहस्ताएवनिवेशउच्यते तत्रमध्यमांशेप्राग्भागेउदकसंस्थापंचानांप्रत्येकमंतरंसार्द्धसप्तहस्ताः
सप्तांगुलानिच ततःप्रतीच्यामेतादृशमेवान्यत्पंक्तित्रयंकार्यंपंक्तीनामंतरंचाष्टौहस्ताः अष्टांगुलानिच एवंविंशतिकुंडा
निमध्यभागेअन्येष्वष्टसुभागेषुमध्येद्वेद्वेइष्टसुदिक्ष्वष्टावष्टाविति प्रत्येकंदशदशेति ननुशतकुंडेषुप्रत्येकंलक्षाहुतिप्रा
प्तिःनचैतत्संभवःकोटिहोमपक्षेसंभवति कृत्वाकुंडलक्षंतदित्यपथोक्तंहस्तसंमितमितिशतमुखप्रकरणेकुंडानांहस्तपरि
माणोक्तेरितिचेत्तत्रकेचित् हस्तसंमितमित्यत्रहस्ताभ्यांहस्तैर्वासंमितविग्रहेणद्वित्रिचतुर्हस्तताअपियुज्यते द्विहस्तेपितु

सं·म· लक्षमाहुतपः समांन्येवपंचाशाहुस्तं अतएवहेमाद्रौ अपुत्तेनत्वयहोतव्येकुंडंस्याद्धस्तमात्रकं द्विगुणंलक्षहोमेतुकोटिहोमेचतु
२६ र्गुणं १ इतियद्यप्यौत्सर्गिकएकवचनांतेनैवविधिः हस्तयाप्यनुपपत्त्याद्विवचनांतेनापिक्रियते यथासत्तदर्शे प्राजापत्यान् पशु॥
नालभ्यत इत्यत्र चोदकप्राप्तैकपशुनिष्पन्नत्त्हृदयाद्येकादशावदानगणानानुरोधेनप्रजापतिर्देवतायस्यासौप्राजापत्यः प्राजा
पत्यश्च प्राजापत्यश्च प्राजापत्यादितिकृतते द्वितानामेकशेषोनतु अपंचायंचैतदित्येकशेषोऽङ्गीरत्नद्वितः चोदकबाधापत्तेरित्युक्तं
एवंचद्विचतुर्थहस्तकुंडसंपत्त्यापुज्यंतएकैकस्मिन्कुंडेलक्षमाहुतयइत्याहुः तातचरणास्तुव्यासतुल्यखातेनषट्पंचतुस्त्रि
द्व्यंगुलानांपंचमेखलानांविंशत्यंगुलोच्चतयाचमध्यावकाशविवृध्याएकैकहस्तेष्वपिशकाएवलक्षमाहुतयः केचित्तु अना
रभ्याम्नानपंचमेखलापक्षेणाप्राकृतमेखलात्रयवाधप्रसंगादेकहस्तत्वानुरोधेनेतिपुत्तमाहुः अत्रैकस्मिन्कुंडे आज्यभा॥
गांतंकृत्वान्यकुंडेष्वग्निप्रणयनमितिकेचित् तन्नवारुणप्राघासिकदक्षिणोत्तरवेद्योरनुष्ठीयमानायांअप्रसक्त्यामाग्नेयपायसेष्ट्यह
विभ्यवाध्याज्यभागप्रयाजाद्यंगानांपृथगनुष्ठानवदाज्यभागांतस्विष्टकृदंगानामनुष्ठानवदिहापीतिसत्रआहुतिर्जुहोतो
तिचंतसंख्ययाभिन्नेषुकोटिसंख्याकेषुहोमेषुलक्षशः शतकुंडेष्वनुष्ठीयमानेष्वाज्यभागांतस्विष्टकृतांआद्यंगानुष्ठानभेदस्यैव॥
नाप्यत्वात् किंचअप्रमादार्थंदीक्षाकालीननजागरणेनदीक्षोपयुक्तसंभारसंरक्षणेपिप्रापणीयाद्यर्थसंभारसंरक्षणार्थत्वाप्यग्नि

समिधनार्थं प्रधानावृत्तिः कथमथ चार्यैवानेह्याचार्यकुंडस्थैः सौमसमिद्धैः कुंडांतरस्थानां समिंधनं भवति अत एवायुतहोमे पूर्वा
लिखितं न तत्र ब्रह्माकारनवकुंडीपक्षे प्रधानयजनानि न्यकुंडेषु प्रणीयन वाचार्यो आज्यभागांतं कृत्वेत्यादिना होमशेषं सम
यं पूर्णाहुतिं हुत्वेत्यं तेनाज्यभागांतानां स्विष्टिकृदादीनां चांगानां आवृत्तिलिखनं प्रयोगपारिजातीयं संगच्छते तत्र देवचकोदि
तोमेवोदकप्राप्तप्राकृताष्टसंख्याबाधेन नवनवतिसंख्यामात्रं विधीयते यद्यपि प्रणागानामावृत्तिमेव एतावान्परं विशेषः श
तसंख्यापाकुंडेषु नवसंख्यावर्तंते अतोग्निस्थापनोत्तरमेव प्रणायनं यत्तु पारिजाते मध्यकुंडात्प्रणायनमुक्तं तत्र प्रागुदग्वर्ग
प्रचारत्वाधात् तेन तत्संरक्षणार्थं नैरृत्यकुंडादेव प्रणायनं कार्यं अस्तु वा कथंचिद युतहोमे मध्यकुंडसद्भावात्तस्य च सर्वप्राधा
न्यभूतसूर्यदेवत्यत्वात्कथंचित्ततः प्रणायनं शतमुखे मध्ये कुंडनिवेशमात्रात्ततोग्निप्रणायनं मध्यस्थलसमीपवर्तिष्वनेककुंडे
षु तु विनिगमानाभिग्रहः सर्वोप्ययं कोटिहोमविचारस्तात चरणैर्हैतनिर्णयेषु द्रष्टव्य इति नेह विस्तरः अथप्रायो मात्स्यानुसा
रिणीं भट्टकृतां यद्धति मनुसृत्यपद्ममखप्रयोगः कर्तामारंभ विनात्पूर्वं सुदिने दानमयूखीयोर्दृक्तप्रकारेणान्यतम प्रकारेण
प्राचीं संसाध्य मंत्रवितस्त्युछ्रायमंडपनिवेशयोग्यं चतुरस्रं च त्वरं कृत्वा पूर्वाह्णे देशकालौ स्मृत्वा ममुककर्मांगत्वे मंडपं करिष्य
इति संकल्प्य गणेशं कूर्मं नागं धवसुधां द्विजांश्च संपूज्य ॥ गच्छ सर्वकल्याणि वसुधे लोकधारिणि । उद्धृतासि वराहेन सशैलव

शां·म· नकानना १ मंडपं कारयाम्यद्यत्वदूर्ध्वं शुभलक्षणा गृहाणार्घ्यं मया दत्तं प्रसन्ना वरदा भवेति २ वसुधाया अर्घ्यं दत्वा स्नानाद्यथि
२७ वीति तां प्रार्थ्य पित्वा मंडपं कृत्वा उदीच्यां मध्ये वा कुंडं वेदीं वा कुर्यात् ३ मंडपश्चायुतहोमे ऽष्टहस्तो दशहस्तो वा कुंडं हस्तमात्रं च
तुरंगुलैकमेखलायं वेदी मंडपोत्तरभागे हस्तविस्तृता वितस्त्युच्छ्रिता वप्रत्रयवती कार्या तत्र प्रथमो वप्रस्त्र्यंगुलोच्छ्रायः तदुपरि
तनौ प्रत्येकं द्व्यंगुलौ तदुच्छ्रितौ विस्तारस्तु सर्वेषामपि प्रत्येकं त्र्यंगुल लक्षहोमे तु मंडपो द्वादशषोडशहस्तोऽपि कुंडं क्षेत्रफलतश्च
तुःकरे तदेव व्यासतो द्विकरं द्वित्रिचतुरंगुलोच्छ्रायत्रिमेखलं तत्रोपरितनी चतुरंगुलविस्तारा अधोगते द्वे अपि प्रत्येकं त्रि
द्व्यंगुलविस्तारा कुंडादीशान्यां सा द्विहस्तविस्तृता तद्वदुच्छ्रितेशानप्रवणा पूर्ववत्त्रिवप्रा वेदी कोटिहोमे तु शततदर्द्धं तद
र्द्धं षोडशान्यतम हस्तो मंडपः कुंडं तु अष्टहस्तं दशहस्तं षोडशहस्तं वा फलतः तद्व्यासत्समखातं मंडपमध्ये तस्य दक्षि
णपश्चिमयोर्निर्ऋत्यां वेदिश्च प्राच्यां द्विहस्तविस्तृतेति विशेषः द्विमुखदशमुखशतमुखेषु तु निर्णयावसरे सन्निवेश उ
क्तः कर्ता सुदिने मासपक्षादि संकीर्त्य श्रीकारादि ग्रहपीडानिवारणकामो वायुतहोमं लक्षहोमं कोटिहोमं वा करिष्य इति सं
कल्प्य गणेशपूजा स्वस्तिवाचन मातृपूजा वृद्धिश्राद्धाचार्यादिवरणानि कुर्यात् तत्रायुतहोमे चत्वार ऋत्विजो द्वौ वा लक्षहोमे द्वा
दशाष्टौ चत्वारो वा कोटिहोमे शतं होमार्थं चत्वारो द्वारजापकाः इति द्वादश अयुतलक्षकोटिहोमेषु त्रिष्वपि षोडश १६ वा ब्रह्मा १

चार्यो व्यपेतमध्येएवसर्वत्रवरणमंत्रास्तु आचार्यस्तु यथास्वर्गे शक्रादीनां बृहस्पतिः तथा त्वं मम यज्ञेस्मिन् आचार्यो भव सुव्रत १
यथा चतुर्मुखो ब्रह्मा स्वर्गलोके पितामहः तथा त्वं मम यज्ञेस्मिन् ब्रह्मा भव द्विजोत्तम २ अस्य यागस्य निष्पत्तौ भवंतोभ्यर्थिता म
या सुप्रसन्नाः प्रकुर्वंतु शांतिकं विधिपूर्वकं ३ कोटिहोमेतु गुरुप्रार्थना त्वमेवतः पिता माता त्वं गतिस्त्वं परायणं त्वत्प्रसादेन वि
प्रर्षे सर्वे स्यान्मे मनोगतं ४ आपद्विमोक्षाय च मे कुरु यज्ञमनुत्तमं कोटिहोमाख्यमतुलं शांत्यर्थं सार्वकामिकं ५ इति ततः स
र्वानाचार्यादीन् स्वशाखीयानामृत्विक्शाखीयानां च पदार्थानामनुसमयेन मधुपर्केण संपूज्य भुक्तमाल्यावरानुलेपनः
सपत्नीकर्त्विग्वृत्तहितो भद्रं कर्णेभिरिति वेदघोषेण मंडपं प्रदक्षिणीकृत्य पश्चिमद्वारेण प्रविशेत् तत आचार्यो यदत्र संस्थितं
भूतं स्थानमाश्रित्य सर्वदा स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु १ अपक्रामंतु भूतानि पिशाचाः सर्वतो दिशं सर्वेषामवि
रोधेन ब्रह्मकर्म समारभेत् २ इति सर्षपान्विकीर्य शुचीवो हव्येति एतोन्विंद्रमिति च तृचाभ्यां आपो हिष्ठेत्यादिभिश्च सुवंप्रो
क्ष्य स्वस्त्ययनं तार्क्ष्यमिति कंग्रहं पयरेत् ततो मंडपनिर्ऋतिभागे हस्तमितां वेदीं कृत्वा तत्र स्थापितवस्त्रं प्रसार्य तत्र सुवर्णादिशला
कं याप्राक्पश्चिमायतान् नव नव च दक्षिणोत्तरायताः शलामध्यकोष्ठचतुष्टयं मे कोष्ठस्य प्रतिकोणं त्रिषु प्रदेशेषु सूत्रं दद्यात् तथा
चतुर्विंशतिरेव पदानि संपद्यंते मंडलस्याग्नेयादिषु कोणेषु शंकुचतुष्टयं विशंतु भूतले नागा लोकपालाश्च सर्वतः मंडपेत्र

ग्रं·प्र वतिष्ठंतु आयुर्वलकराः सदा १ इतिमंत्रेणनिखाप्य अग्निभ्योप्यथ सर्वेभ्यो ये चान्ये तान्समाश्रिताः तेभ्यो वलिं प्रयच्छामि पुण्यमो
२८ दनमुत्तमं १ नैरृत्याधिपतिश्चैव नैरृत्यां ये च राक्षसाः वलिं तेभ्यः प्रयच्छामि सर्वे गृह्णंतु मंत्रितं २ ॐ नमो वास्तुरक्षेभ्यो ये चा
न्ये तान्समाश्रिताः वलिं तेभ्यो प्रयच्छामि पुण्यमोदनमुत्तमं ३ रुद्रेभ्यश्चैव सर्वेभ्यो ये चान्ये तान्समाश्रिताः वलिं तेभ्यः प्रयच्छा
मि गृह्णंतु सततोत्सुकाः ४ इति मंत्रैः शंकुपार्श्वेषु यथाक्रमं प्रतिमंत्रेण माषभक्तवलीन्दत्वा शांतिर्यशोवती कांतिर्विशा
ला प्राणवाहिनी सतीवसुमनानंदा सुभद्रेति नव स्मृता इति नव प्रागायतरेखादेवताः पूजयित्वा हिरण्या सुप्रभा लक्ष्मी
र्विभूतिर्विमला प्रिया जया कला विशोका च इति नव दक्षिणोत्तरायतरेखादेवताश्च संपूज्य मध्ये ब्रह्म समस्त आवृत्तिभिर्वास्तु
पुरुषमावाह्य वास्तोष्पते प्रतीति संपूज्य वलिं च दत्त्वा मध्यपदचतुष्टये वास्तोर्हृदये ब्रह्माणमावाह्य पूजयित्वा ॐ ब्रह्मणे नमो व
लिं समर्पयामि इति पायसादि वलिं दद्यात् ततः पूर्वपदद्वये दक्षिणस्तने अर्यम्णे नमः दक्षिणपदद्वये जठरं दक्षिणभागे विव
स्वते नमः पश्चिमपदद्वये जठरवामभागे मित्राय० वामस्तने पृथ्वीधरायनमः इत्युदकपदद्वये आग्नेयकोणसूत्रे द्विधाकृतवह्नि
पदसंलग्नपदोत्तरार्द्धे दक्षिणहस्ते सावित्राय० दक्षिणार्द्धे दक्षिणहस्तावेव सवित्रे च एवं नैरृत्यपदपूर्वार्द्धे वृषणयोर्विवुधा
धिपाय नमः तत्पश्चिमार्द्धे मेढ्रे जयंताय० वायव्यपद दक्षिणार्द्धे वामहस्ते राजयक्ष्मणे० उत्तरार्द्धे वामहस्तावेव रुद्राय ईशानपदे

न्तरार्द्धे उरसि अद्भ्यो॰ दक्षिणार्द्धे मुखे आपवत्साय नमः ततोसंपंक्तिगते ईशानपददक्षिणार्द्धे शिरसि शिखिने॰ तद्दक्षिणे सार्द्ध पदे
नेत्रे पर्जन्याय॰ तद्दक्षिणयोर्दक्षिणयोर्दक्षिणश्रोत्रे जयंताय तद्दक्षिणयोर्दक्षिणांसे कुलिशायुधाय॰ तद्दक्षिणयोर्दक्षिणवा
हौ सूर्याय॰ तद्दक्षिणयोर्दक्षिणबाहवेव सत्याय॰ तद्दक्षिणे सार्द्धे दक्षिणकूर्परे भृशाय॰ तद्दक्षिणाग्नेयपदार्द्धे दक्षिणप्रवा
हवे आकाशाय नमः॰ तत्पश्चिमार्द्धे दक्षिणप्रवाहावेव वायवे॰ तत्पश्चिमे सार्द्ध पदे दक्षिणमणिबंधे पूष्णे॰ तत्पश्चिमये
दक्षिणपार्श्वे वितथाय॰ तत्पश्चिमयोर्दक्षिणपार्श्वे एव गृहक्षताय॰ तत्पश्चिमहृद्ये पद दक्षिणोरौ यमाय॰ तत्पश्चिमयोर्दे
क्षिणजानौ गंधर्वाय॰ तत्पश्चिमे सार्द्ध पदे दक्षिणजंघायां भृंगराजाय॰ तत्पश्चिमे नैरृत्यपदार्द्धे दक्षिणस्फिचि मृगाय॰ त
दुत्तरार्द्धे पादयोः पितृभ्यो॰ तदुत्तरे सार्द्ध पदे वामस्फिचि दौवारिकाय॰ तदुत्तरयोः वामजंघायां सुग्रीवाय॰ तदुत्तरयोर्वाम
जानौ पुष्पदंताय॰ तदुत्तरयोर्वामोरौ वरुणाय नमः तदुत्तरयोर्वामपार्श्वे ऽसुराय॰ तदुत्तरे सार्द्ध पदे वामपार्श्वे शोषाय॰ त
दुत्तरे वायव्यार्द्धे वाममणिबंधे पापाय॰ तत्प्रागर्द्धे वामप्रवाहौ रोगाय॰ तत्प्राक् सार्द्धे वामप्रवाहावेव अहये॰ तत्प्राग्हृद्ये वाम
कूर्परे मुख्याय॰ तत्प्राक्हृद्ये वामबाहौ भल्लाटाय॰ तत्प्राग्हृद्ये वामबाहवेव सोमाय॰ तत्प्राग्हृद्ये वामांसे सर्पाय॰ तत्प्राक्
सार्द्धे वामश्रोत्रे अदित्यै॰ तत्प्रागर्द्धे वामनेत्रे दित्यै॰ तदुत्तरे वास्तोष्पतिद्वितिवास्तोष्पतिं ततो मंडलाद्बहिरीशानादिषु चर

प्रा·म २६ कैयै० विदार्यै० पूतनायै० पेपराक्षस्यै० ततः पूर्वादिषु स्कंदाय० अर्यम्णे० जृंभकाय० पिलिपिंछाय० पुनः पूर्वादिषु इंद्रादीन्
ततो मंडलादीशाने कलशं संस्थाप्य तत्र वरुणं तत्वायामीत्यावाह्य पूजयेत् यथा मेरुगिरेः शृंगं देवानामालयः सदा तथाब्र
ह्मादिदेवानां मम यज्ञे स्थिरो भवेदिति प्रार्थयेदिति ततउदुंबरादिसमित्तिलाज्यैः स्वतंत्रस्थंडिले अष्टाविंशतिरष्टौ वा प्रत्येक
नाममंत्रैर्हुत्वा वास्तोष्पत इति चतुर्भिश्च हुत्वा ॐ वास्तोष्पतये नमः इति मंत्रेण पंचविल्वफलानि हुत्वा स्विष्टकृदादि पू
र्णाहुत्यंतं कुर्यात् ततो मंडलदेवताभ्यः पायवलिं दत्वा कृणुष्वपाज इति सूक्तादिना मंडपं त्रिसूत्रेणावेष्टयित्वा वास्तुक
लशोदकेन यजमानमभिषिच्य पुनः संपूज्य यथाशक्ति दक्षिणां दत्वा ब्राह्मणान्भोजयेदिति शारदातिलके तु होमो नोक्तः
तिलाज्यादिद्रव्याणां विकल्प इति ग्रंथांतरे० इति वास्तुपूजा० मात्स्ये उपोषितास्ततः सर्वं कृत्वैनमधिवासनमिति पाद्मे उ
पवासो भवेदेवमशक्तो नक्तमिष्यते इति सद्योधिवासनं चाथ कुर्याच्चो विमलो नरः इति तत्रैवोक्तं अधिवासनं चैवं तो
रणद्वारपूजा पूर्वद्वारे द्वारश्रियै० ऊर्ध्वदेहल्यै० अधः वामदक्षिणस्तंभयोः गणेशायनमः स्कंदायनमः द्वारस्थितकलशद्व
ये गंगायै यमुनायै० दक्षिणे द्वारश्रियै० उर्ध्वदेहल्यै० अधः स्तंभयोः पुष्पदंताय नमः कपर्दिने० कलशद्वये गोदावर्यै०
कृष्णायै० इति पश्चिमे द्वारश्रियै० ऊर्ध्वदेहल्यै० अधः स्तंभयोर्नंदिने० चंद्राय० कलशद्वये रेवायै० ताप्यै० उत्तरे द्वारश्रियै०

ऊर्ध्वे देहल्यै० अधः स्तंभयोर्महाकालायनमः भृंगिरो० कलशद्वये वा लै० दे रो० इतिद्वारपूजा अथतोरणपूजा तत्र
पूर्ववत्सिद्धे स्तंभद्वये वटतोरणमाश्वत्थंवासुदृढनामकं सुशोभननामकं वाशंखांकितमग्निमीळइति मंत्रेणान्यस्य संपूज्य
गणस्य हृदस्पतितत्रन्यसेत् पूजयेच्च तत्रैकः कलशःस्थाप्यः तत्रमहीद्यौरितिभूप्रार्थना ओषधयः समितिपवप्रक्षेपः
आजिघ्रकलशेतिकलशंनिधाय इमंमेगंगेति जलपूरणं गंधद्वारामितिगंधंक्षिपेत् याओषधीरितिसर्वौषधीः कांडात्कां
डादितिदूर्वा अश्वत्थेवइतिपंचपल्लवान् स्योनापृथिवीतिपंचमृदः याःफलिनीतिफलं सहिरत्नानीतिपंचरत्नानि हि
रण्यरूपइतिहिरण्यं युवासुवासाइतिवस्त्रादिनावेष्टयेत् पूर्णादर्वीतिधान्यपूर्णपात्रमुपरिनिदध्यात् तत्रभौमवावाहनं
पूजनंच ततोदक्षिणे औदुंबरंप्लक्षंवासुभद्रंविकटंवाचक्रांकितंतोरणंइषेत्वोर्जेत्वेतिनिधायचंदनादिचर्चितंकृत्वास्तू
र्यमंगारकंचतत्रन्यसेत् ततःपूर्ववत्कलशंस्थापयित्वा तत्रग्रहमावाह्यार्चयेत् ततपश्चिमे प्लक्षमौदुंबरं वासुकर्मसुभीमं
वागदांकितंतोरणमत्र आपोहीष्ठेतिन्यस्यसंपूज्य चंदनादिना चर्चितंकृत्वाशुक्रंबुधंचतत्रन्यसेत् ततःपूर्ववत्कलशंस्था
पयित्वातत्रवाकस्यावाहनादि ततोत्तरेन्यग्रोधमाश्वत्थंपालाशंवासुहोत्रंसुप्रभंवापद्मांकितंतोरणं शन्नोदेवीतिनि
धायपूजितंकृत्वासोमकेतुशनिंचतत्रन्यसेत् ततःकलशंस्थापयित्वातत्रविघ्नेशावाहनपूजनादि ततः पूर्ववद्द्वारशाखाद्वये

कलशद्वये निदध्यास्तनादियुक्तं पूर्ववत्स्थापयेत्ते ऐरावतं कलशद्वयेन्यस्यार्चयेत् तत्र पूर्वस्मिन्नृग्वेदादिनोर्ऋत्विजौ द्वावेकशां
न्तिसूक्तजपार्थत्वेन त्वामहं वृणोइति प्रत्येकं ऋग्वेदः पद्मपत्राक्षो गायत्रः सोमदैवतः अत्रिगोत्रस्तु विप्रेंद्र ऋत्विक्त्वं मे मखे भ
वेति वृत्वाग्निमीळइत्ति पूजयेत् एह्येहि सर्वामरसिद्धसाध्यैरभिष्टुतो वज्रधरामरेश संवीज्यमानोप्सरसांगणेन रक्षाध्वरन्नो
भगवन्नमस्ते १ भो इंद्र इहागच्छागच्छ इह तिष्ठेंद्रं सांगं सपरिवारं सायुधं सशक्तिकं द्वारकलशे आवाह्यत्रातारमिंद्रमिति पू
जयित्वा भुः शिशानइत्ति पीतां पताकां ध्वजं चोच्छ्रयेत् तत ऐरावतस्था पीतवर्णां सहस्राक्षं दक्षिणे वामहस्ते वज्रोत्पलभिं
द्रं ध्यात्वा इंद्रः सुरपतिः श्रेष्ठो वज्रहस्तो महाबलः शतयज्ञाधिपो देवस्तस्मै नित्यं नमोनमः इति नत्वा इंद्राय सांगाय सपरि
वाराय सायुधाय सशक्तिकाय एतं माषभक्तबलिं समर्पयामीति बलिं दद्यात् तत आग्नेयकोणे गत्वा पूर्ववत्कलशं स्थाप
यित्वा तत्र पुंडरीकमसृतं च संपूज्य एह्येहि सर्वामर हव्यवाह मुनिप्रवर्यैरभितोभिजुष्ट तेजोवता लोकगणेन सार्द्धं ममाध्व
रं पाहि कवे नमस्ते १ भो अग्ने इहागच्छेह तिष्ठेति सांगादिकमग्निं कलशे आवाह्य त्वन्नोऽग्न इत्यग्निं संपूज्याग्निं दूतमिति रक्तां
पताकां रक्तवर्णं ध्वजं चोच्छ्रयेत् ततश्छागस्थं रक्तं दक्षिणे वामकरधृतशक्तिकमंडलुं यज्ञोपवीतिनमग्निं ध्यात्वा आग्नेयः पुरुषो
रक्तः सर्वदेवमयोव्ययः धूमकेतुरजोध्यक्षस्तस्मै नित्यं नमोनमः १ इति नत्वा अग्नये सांगाय एतं माषभक्तबलिं समर्पयामी

ततोय
र्वलिंदद्यात् ततः कृताचमनो दक्षिणोगत्वाग्निद्वारशोकं पूर्ववत्कलशद्वयं स्थापयित्वाचामनं दिग्गजं ततत्रार्चयेत् ततोय
मुदे दिनोद्वावेकं वा दक्षिणद्वारे शांतिसूक्तज पार्थत्वेनत्वामहं वृणोइत्युक्त्वा कानराक्षोपर्जुवेदस्त्वैशुभो विष्णुदेवतः कास्य
सपस्तुर्विप्रेंद्र ऋत्विक् त्वंमेमखेभवेति प्रत्येकं संप्रार्थ्य इषेत्वोर्जेत्वेति पूजयेत् ततएह्येहि वैवस्वत धर्मराज सर्वामरैरर्चि
तप्रसुर्विप्रेंद्र तनत्विक त्वंमेमखेभवेति प्रत्येकं संप्रार्थ्य इषेत्वोर्जेत्वेति पूजयेत
न धर्ममूर्ते शुभाशुभानंदशुचामधीश शिवायनः पाहिमखंनमस्ते १ भोयमइहागच्छइहतिष्ठेति सांगादियममावाह्य प
मा पसोम मितिसंपूज्य रुस्लाप ताकां ध्वजं वायंगोरीत्सुच्छ्रयेत् ततोमहिषारूढं धृतदंडपाशं दक्षिणवामकरं मंजनपर्वतनुतु
ल्यरूपमग्निसमलोचनं यमंध्यात्वा महामहिषमारूढं दंडहस्तंमहाबलं आवाहयामियज्ञेस्मिन्पूजेयंप्रतिगृह्यतां
१ इतिनत्वा सांगाययमायैतंमाषभक्तबलिंसमर्पयामि इतिबलिंदद्यात् ततआचम्य नैरृत्यां पूर्ववत्कलशस्थापयित्वा
कुमुदं दिग्गजं वुर्जं यंच संपूज्य एह्येहि रक्षोगणनायकस्त्वं विशालवेतालपिशाचसंघैः ममाध्वरं पाहिपिशाचनाथलो
केश्वरस्त्वंभगवन्नमस्ते १ भोनिरृते इहागच्छेहतिष्ठेति सांगमावाह्यासुन्वंतमितिसंपूज्य नीलांयताकां ध्वजं चमोखुणाद
ति उच्छ्रित्य नरारूढं खड्गहस्तं नीलवर्णं महाबलं महावीरंमहाकायंवद्भुराक्षससंयुतं १ निरृतिंध्यात्वा निरृतिं खड्गह
स्तं वसर्वलोकैकपावनं आवाहयामियज्ञेस्मिन् पूजेयं प्रतिगृह्यतामितिनत्वा सांगाय निरृतयेएतंमाषभक्तबलिंसमर्प

यामीति बलिं दद्यात् तत आचम्य पश्चिमे प्रतिहारशारवं कलशद्वयं निधाय जनं दिग्गजं न्यस्यार्चयेत् ततः साम्नगावृत्विजावृत्विजं
वावृत्वा सामवेदस्तु पिंगाक्षो जागतः शाक्रदैवतः भारद्वाजस्तु विप्रेंद्र शांतिं पाठं मखे कुरु १ इति प्रार्थ्य अग्न आयाहीति पूज
यित्वा तत एह्येहि यादोगणवारिधे नागगणेन पर्जन्यसहाप्सरोभिः विद्याधरेंद्रामरगीयमानः पाहि त्वमस्मान्भगवन्नम
स्ते १ इत्युक्त्वा भो वरुण इहागच्छेह तिष्ठेति सांगं वरुणमावाह्य तत्वा यामीति संपूज्य श्वेतां पताकां ध्वजं च इमं मे वरुणेति उ
च्छ्रित्य मकरस्थं पाशहस्तं किरीटिनं श्वेतवर्णं वरुणं ध्यात्वा पाशहस्तं च वरुणमरुणसायतिमीश्वरं आवाहयामि यज्ञेऽस्मि
न्वरुणाय नमो नमः इति नत्वा सांगाय वरुणायेतं माषभक्तबलिं समर्पयामीति बलिं दद्यात् तत उपश्चिमे वायव्यां पूर्वव
त्कलत्रं स्थापयित्वा पुष्पदंतसिद्धार्थं च तत्र पूजयित्वा एह्येहि यज्ञे मम रक्षणाय मृगाधिरूढः सहसिद्धसंघैः प्राणाधिपः
कालकवेः सहाय गृहाण पूजां भगवन्नमस्ते १ भो वायो इहागच्छेह तिष्ठेति सांगादिवायुमावाह्य तव वायवृतस्पत इति संपूज्य
वायो क्रतमिति धूम्रं पताकां ध्वजं चोच्छ्रित्य मृगारूढं चित्रांबरधरं युवानं वरध्वजधरं दक्षिणवामहस्तं वायुं ध्यात्वा वायुमाक
र्णं चैव पवनं वेगहतिं आवाहयामि यज्ञेऽस्मिन्पूजने यं प्रतिगृह्यतां १ अनाकारो महोजाश्च यश्चादृश्यगतिर्दिवि तस्मै पूज्या
य जगतो वायवे हं नमामि ते २ इति नत्वा सांगाय वायवे एतं माषभक्तबलिं समर्पयामीति बलिं दद्यात् तत आचम्योत्तरे ग

तिद्वारशाखंकलशद्वयंस्थापयित्वासार्वभौमंदिग्गजंन्यस्यपूजयित्वाथर्ववेदविदाऋत्विजावुत्तरद्वारेशांतिसूक्तजपार्थत्वेनाहं
वृणोइत्युक्त्वा वृहन्नेत्रोथर्ववेदोनुष्टुभोरुद्रदैवतः वैशंपायनविप्रेंद्र शांतिपाठंमखेकुरु १ इतिप्रार्थ्य शन्नोदेवीरितिपूजयेत
रक्षोहियज्ञेश्वरयज्ञरक्षांविधत्स्वनक्षत्रगणेन सार्धंसर्वौषधीभिः पितृभिः सहैवगृहाणपूजांभगवन्नमस्ते १ ओंसोमइहा
गच्छेहतिष्ठेतिसांगंसोममावाह्यवसुसोमेतिसंपूज्यहरितांपताकांध्वजंचाप्याप्यस्वेतिन्यस्य नरयुतपुष्पकविमानस्थंकुंड
लहारकेयूरसंशोभितंवरदंगदाधरंदक्षिणवामहस्तंमुकुटेनमहोदरंस्थूलकायंह्रस्वपिंगनेत्रंपीतविग्रहंशिवसखाय
कुवेरंध्यात्वा सर्वनक्षत्रमध्येतुदिशिराजाव्यवस्थितः तस्मैसोमायदेवायनक्षत्रपतयेनमः १ इतिध्यात्वा सांगायसोमायेत्ता
माषभक्तवलिंसमर्पयामीतिवलिंदद्यात् ततईशान्यांगत्वाब्रह्मपूर्ववल्कत्त्वरांस्थापयित्वासुप्रतीकनामानंदिग्गजंमंगलंच
तत्रपूजयित्वा एह्येहिविश्वेश्वरनस्त्रिशूलकपालखट्वांगधरेणसार्धं लोकेनयज्ञेश्वरयज्ञसिध्यैगृहाणपूजांभगवन्नमस्ते
१ ईशानेहागच्छेहतिष्ठेतितमावाह्यतमीशानमितिसंपूज्यश्वेतांसर्ववर्णांवापताकांध्वजंचाभित्वादेवसवितरित्युच्छ्रिस
वृषारूढंवरदंत्रिशूलयुतंदक्षिणवामहस्तद्वयंत्रिनेत्रंशुद्धस्फुटिकवर्णमीशानं ध्यात्वावृषस्कंधसमारूढंशूलहस्तंत्रि
लोचनं आवाहयामियज्ञेस्मिन्पूजेयंप्रतिगृह्यतां १ सर्वाधिपोमहादेवईशानःशूलकृदीश्वरःशूलपाणिर्विरूपाक्षःस्तस्मै

श्रा·म नित्यंनमोनमः २ इतिनत्वा सांगायईशानायये तेमाष्यभक्तवलिंसमर्पयामिइतिवलिंदद्यात् ततआचम्यईशानपूर्वयोर्मे
३२ ध्येगत्वा एह्येहि पातालधरामरेंद्रनागांगनाकिन्नरगीयमान यक्षामरेंद्रामरलोकसंघैरनंतरक्षाध्वरमस्मदीयं १ भोअ
नंतेहागच्छेहतिष्ठेति सांगमनंतमावाह्य यंगोरीतिसंपूज्य मेघवर्णां श्वेतावापताकांध्वजंचार्पयेगौरीत्युच्छ्रित्य अनंतंश
पनासीनंफणासप्तकमंडितं पद्मशंखधरोर्ध्वाधोदक्षिणकरद्वयं चक्रगदाधरोर्ध्वाधोवामकरद्वयंनीलवर्णमनंतंध्या
त्वा योसावनंतरूपेणब्रह्मांडं सचराचरं पुष्पवद्धारयेन्मूर्ध्निस्तस्मैनित्यंनमोनमः इतिनत्वा सांगायानंतायैतंमाषभक्तव
लिंसमर्पयामीतिवलिंदद्यात् ततआचम्यनैरृत्यपश्चिमयोर्मध्येगत्वा एह्येहि सर्वाधिपतेसुरेंद्रलोकेनसार्द्धं पितृदेवता
भिः सर्वस्यधातास्यमितप्रभावोविशाध्वरंनः सततंशिवाय १ भोब्रह्मन्निहागच्छेहतिष्ठेतिब्रह्माणमावाह्य ब्रह्मयज्ञानमि
तिसंपूज्यरक्तांपताकांध्वजंच ब्रह्मयज्ञानमितित्युच्छ्रित्य चतुर्मुखंहंसारूढमक्षमालांकुशमुष्टिधरोर्ध्वाधोदक्षिणकरद्व
यं श्रुवकमंडलुधरोर्ध्वाधोवामकरद्वयंश्मश्रुलंजटिलंलंबोदरंरक्तवर्णंध्यात्वा पद्मयोनिश्चतुर्मूर्तिर्वेदावासः पिताम
हः यज्ञाध्यक्षश्चतुर्वक्त्रस्तस्मैनित्यंनमोनमः १ इतिनत्वा सांगायब्रह्मणेएतंमाषभक्तवलिंसमर्पयामीतिवलिंदद्यात्
नैरृत्यपश्चिमांतरालेनंतवलिदानं ईशानपूर्वांतरालेब्रह्मवलिदानंचेतिरूपनारायणः ततआचम्य मंडपमध्येतु

ग्रदेशोदेशाहस्तदीर्घस्त्रिहस्तविस्तृतः पंचहस्तदीर्घोहस्तविस्तारोवामहाध्वजः किंकिंणपादियुक्तः इंद्रस्यवृहन्नइतिस्थाप्यः तत्रै
वकस्मिपूजनंच ततोमंडपषोडशस्तंभेषुसर्वेभ्योदेवेभ्योनमः वंशेषुकिन्नरेभ्योनमः पृष्ठेपन्नगेभ्योनमः इत्यर्चयेत् ततःपू
र्वं भस्मेडुपलिप्तभूमावुपविश्य त्रैलोक्येयानिभूतानिस्थावराणिचराणिच ब्रह्मविष्णुशिवैः सार्द्धंरक्षांकुर्वंतुतानिमे १
देवदानवगंधर्वायक्षराक्षसपन्नगाः ऋषयोमनवोगावोदेवमातरएवच २ सर्वेममाध्वरेरक्षांप्रकुर्वंतुमुदान्विताः ब्र
ह्माविष्णुश्चरुद्रश्चक्षेत्रपालगणैः सह ३ रक्षंतुमंडपंसर्वेघ्नंतुरक्षांसिसर्वतः इतिपठित्वा त्रैलोक्यस्थेभ्यः स्थावरेभ्यो
जंगमेभ्योनमस्त्रैलोक्यस्थेभ्योभूतेभ्योनमः ब्रह्मणेविष्णवेशिवायदेवायदेवेभ्योदानवेभ्योगंधर्वेभ्योराक्षसेभ्यः पन्नगेभ्यः
ऋषिभ्योमनुष्येभ्योगोभ्योदेवमातृभ्योनमः प्रत्येकंसंपूज्यभूमौमाषभक्तवलिंदद्यात् ततोयजमानःसर्वैरृत्विग्भिःसहप्रा
ग्द्वारेणमंडपंप्रविश्यदक्षिणद्वारगयश्चिमदेशेउपविश्यगुर्वादयोयथाविहीतंकर्मकुरुध्वंइतिवदेत् प्रतिकुंडमेकैकः
कलशंऋत्विग्भिःस्थाप्यइतिकेचित् गुरुणास्थाप्यइत्यन्ये ततोऋग्वेदादिक्रमात्प्रागादिकुंडेषुऋत्विजोग्निंस्थापयेयुः
ततोगुरुर्यजमानान्वितोग्रहवेद्यांसर्वतोभद्रमंडलेदेवतास्थापयेदितिपितामहचरणाः यथा अघेत्यादिमंडलदेवतास्था
पनमहंकरिष्येतिसंकल्प्यस्थापयेत् तत्रमध्येद्वस्थाणं ब्रह्मजज्ञानंगोनमोवामदेवोब्रह्मात्रिष्टुपस्थापनेपूजनेचविनियो

छाग एतावेदक्षिणाः क्रमात् १ ग्रहानुद्दिश्यदेयाः ततः शत्याब्राह्मणान्भोजयेत् संकल्पयेद्वाशक्तौ ततोदीनानाथेभ्योभूयसी
दक्षिणांदत्वा मंडपदेवतानांग्रहपीठदेवतानांचोत्तरपूजांकृत्वा यांतुदेवगणाः अभ्यारमितद्वयोः ० उत्तिष्ठब्रह्मणस्पतइति
तांउत्थाप्यविसृज्य मंडपादीन्प्रतिमादींश्वसर्वान्संभारानाचार्याय प्रतिपाद्य यस्यस्मृत्याचनामोक्त्या० प्रमादात्कुर्वतां
मितिपठित्वा कर्मेश्वरार्पणंकृत्वा विप्राशिषोगृहीत्वा तान्नमस्कृत्य सुहृद्युतोभुंजीतेतिसर्वंशिवं ० इतिश्रीभट्टशां
करात्मजनीलकंठकृतः शांतिपरिभाषाप्रयोगः अथग्रहयोगशांतिः यामलेदुर्भिक्षादिभयंचैवचतुर्ग्रहसमन्वये: महारोग
भयंराष्ट्रक्षयोवृष्टिविनाशनं १ पंचग्रहसमायोगेदुर्भिक्षंशोकरादिकं नृपवैरंगर्भनाशोजायतेजननाशनं २ ग्रहषट्कसमायो
गेमंत्रिणांमरणंभवेत् पश्वश्वादिभयंसर्वंसंकरादिजनक्षयः ३ पट्टराज्ञोविनाशोवामहाभयमथापिवा सप्तग्रहसमायोगे
क्षितीशामरणंध्रुवं ४ जगत्प्रलयमेवापितदतिमानुषंजगत् अतऊर्ध्वंमहोत्पाताःनानादुःखसमाकुलं ५ सूर्यश्चघातिरि
क्तश्चेतदायोगोमहाद्भुतः विनाचंद्रेणयोगोपिजगत्प्रलयकारणं ६ तद्दृक्षजातुजंतूनांमहारोगोमहाभयं अथनीराः स्थान
नाशोमानहानिर्नृपोडनं ७ वातपित्तादिसंभूतमहापीडामहद्भयं समायोगेग्रहान्नृणांदोषान्कुर्वंतिसर्वदा ८ षण्मासाभ्
यंतरेवापिआयुर्हानिःश्रियस्तथा जन्माष्टद्वादशेराशौचतुर्थेपंचमेपिवा ९ पूर्वोक्तफलमेवात्रतस्माच्छांतिंप्रयत्नतःकुर्या

दोषानुशारेण वित्तशाठ्यं न कारयेत् १० ततद्ग्रहाकृतिं कृत्वा सौवर्णेन प्रयत्नतः सुवर्णेन तदर्धेन पादेनापि कनीयसीं ११ वि
त्तशाठ्यं न कर्त्तव्यं कर्त्तव्यं शक्तितो नरैः पूर्वोक्तलक्षणेनैव ग्रहमूर्तिं च कारयेत् १२ ग्रहस्यैकैककलशं ग्रहयोगप्रमाणतः का
रयेत्कुंभमेकं वा निर्व्रणं सुदृढं नवं १३ गृहस्यैशानदिग्भागे भुद्धदेशे समस्थले कुंडे वा स्थंडिले वापि होमं कुर्य[illegible]नतः स्व
त्स्य पूर्वोत्तरे देशे पूजास्थानं प्रकल्पयेत् चतुरस्रहस्तमात्रं स्थंडिलं तंडुलेन तु १५ लिखेद्ग्रहाकृतिं तत्र स्थापयेत्प्रतिमां त
तः अधिप्रत्यधिदेवादीन् दक्षिणोत्तरतः क्षिपेत् १६ उक्तगंधैस्तथा पुष्पैस्तन्मास्यैः फलैरपि ततद्ग्रहोक्तमन्त्रेण पूर्वोक्तेनैव
पूजयेत् १७ स्वस्तिवाचनपूर्वेण आचार्यो ऋत्विजैः सह ग्रहपूजादिकं कृत्वा नैवेद्यांत समर्पयेत् १८ ततो होमं प्रकुर्वीत स्वगृह्यो
क्तविधानतः चतुर्थ्यंतं प्रकुर्वीत कलशस्थापनं ततः १९ पूर्वोक्तेन विधानेन भुद्धतोयेन पूरयेत् पंचामृतं पंचगव्यं पंचत्वकं च प
ल्लवं २० ततन्मंत्रैर्विनिःक्षिप्य औषधानि विनिक्षिपेत् ततद्ग्रहोक्तविधिना मूलान्यादाय निक्षिपेत् २१ अवलिंगैर्वारुणै
र्वापि कलशं पूरयेद्गुरुः ततद्ग्रहोक्तविविधैस्ततन्मंत्रैर्हुनेदथ २२ चर्वाज्ये जुहुयात्पश्चात्तिलाहुतिमथाचरेत् अथ स्विष्टकृतं
हुत्वा होमशेषं समापयेत् २३ भद्रासनोपविष्टस्य यजमानः स्य ऋत्विजैः कलशस्थोदकेनैवमभिषेकं समाचरेत् २४ योगग्र
होक्तमंत्रैश्च अधिप्रत्यधिमंत्रतः नवग्रहोक्तमंत्रैश्च जातवेदादिपंचकैः २५ त्रिपंचकेन मंत्रेण क्षेत्रस्य पतिना अपि यत इंद्र इत्ये

शा॰म॰ नैवलोकपालाग्रहैरपि २६ सुरास्त्वाइतिमंत्रेणायेन देवाद्यःक्रमात् अन्यैश्च पुराणसूक्तैश्च अभिषेकं समाचरेत् २७ अभिषेका
४० प्लुतंवस्त्रंमाल्यार्पणनिवेदयेत् ततःशुक्लांवरधरःकुर्यादाज्यावलोकनं २८ ऋत्विग्भ्योदक्षिणांदद्याद्धेनुंशंखादिकानपि तदभा
वेयथाशक्तिहिरण्यमपिदापयेत् २९ ब्राह्मणान्भोजयेत्पश्चाद्यथाविभवसारतः एवंयःकुरुतेभक्त्याग्रहदोषविवर्ज्जितः ३०
पूर्वोक्तसर्वदोषैश्चविमुक्तःपुत्रवान्सुखी आपुरैश्वर्यसंपन्नोजीवेद्वर्षशतंनरः इहलोकेसुखीभूत्वापश्चाच्छिवपुरंव्रजेत् ३१
इतिग्रहयोगशांतिः अथग्रहस्नानानि विष्णुधर्मोत्तरे मंजिष्टामदमातंगकुंकुमरक्तचंदनं पूर्णकुंभेकातंताम्रसूर्यस्ना
नंविधीयते १ मदमातंगगजमदः १ उशीरंचशिरीषचकुंकुमंरक्तचंदनं शंखंन्यस्तमिदंचंद्रदोषविनाशनं २ खदिरंदेवदारुं
चतिलानामलकानिच पूर्णकुंभेकृते रौप्येभौमपीडाविनाशनं ३ नदीसंगमतोयानितन्मृदासहितानिच न्यस्तानिकुंभे
माहेयेबुधपीडाविनाशनं माहेयेमृण्मये ४ औदुंवरंतथाविल्वंवटमामलकंतथा न्यस्तंतुकुंभेसौवर्णेजीवपीडाविनाश
नं ५ गोरोचनानागमदःशतपुष्पाशतावरी विन्यस्ताराजतेकुंभेशुक्रपीडाविनाशनं ६ तिलान्माषान्प्रियंगुंचगंधपुष्पं
तथैवच न्यस्तंकार्ष्णायसेकुंभेसौरीपीडाविनाशनं ७ गुग्गुलंहिंगुलंहिंगुलंतालंभुंभाचैवमनःशिला भृंगेचमाहिषेन्यस्ते
राहुपीडाविनाशनं ८ तालंहरितालं वाराहनिहतांराजन् पर्वताग्रमृदंतथा छागक्षीरंखड्गपात्रेकेतुपीडाविनाशनं ९ व

राहुनिहतावराहोत्तवता खड्गोगंडकः १ उक्तंग्रहस्नानमिदंसर्वपीडाविनाशनं ० इतिग्रहस्नानानि ० अथादित्यशांति ० भ
विष्ये आदित्यवारं हस्तेन पूर्वं गृह्य विचक्षणः मंत्रोक्तविधिनासर्वंकुर्यात्पूजादिकंरवेः १ त्वत्यर्के सप्तनक्तानिकृत्वाभक्तिप
रोनरः ततस्तुसप्तमेमासेकुर्याद्ब्राह्मणभोजनं २ भास्करंभुद्धसौवर्णंकृत्वायत्नेनमानवः ताम्रपात्रेस्थापयित्वारक्तपुष्पैःप्रपू
जयेत् ३ रक्तवस्त्रयुगच्छत्रंपादत्राणयुगान्वितं घृतेनस्नापयित्वाःचलड्डुकान्विनिवेद्यच ४ होमंघृततिलैःकुर्याद्रविनाम्ना
चमंत्रवित् समिधाष्टोत्तरशतमष्टाविंशतिरेवच ५ होतव्यामधुसर्पिभ्यांदध्नाचैवघृतेनच मंत्रेणानेनविदुषेब्राह्मणाय
प्रदापयेत् ६ आदिदेवनमस्तुभ्यंसप्तसप्तेदिवाकर त्वंरवेतारयस्वास्मान् तस्मात्संसारसागरात् ७ व्रतेनानेनराजेंद्रभवे
दारोग्यमुत्तमं द्रव्यसंपत्सुतप्राप्तिरितिपौराणिकाविदुः ८ अपिसंवादिनोप्येषंशांतिःपुष्टिःसदानृणां सूर्यपीडासुघोरा
सुकृताशांतिःशुभप्रदा ९ इति० अथचंद्रशांति ० तत्रैवतद्वच्चित्रासुसंगृह्यसोमवारंविचक्षणः अनेनैवोक्तविधिना
कुर्यात्पूजादिकंविधोः सप्तमेतुततःमासेकुर्याद्ब्राह्मणभोजनंकांस्यपात्रेथसंस्थाप्यसोमरत्नसंभवं श्वेतवस्त्रयुगच्छत्रं
श्वेतपुष्पैःप्रपूजितं १ पादुकोपानहच्छत्रभोजनासंयुतंहोमंघृततिलैःकुर्यात्सोमनाम्नाचमंत्रवित् २ समिधोष्टोत्तरशतं
अष्टाविंशतिरेववाहोतव्यामधुसर्पिभ्यांदध्नाचैवघृतेनच ३ दध्यन्नशिखरंकृत्वाब्राह्मणायनिवेदयेत् मंत्रेणानेनराजेंद्रस

श्री० म०
५२

ष्यकुभक्त्यासमन्वितः ४ महादेवजातिवल्लीपुष्पगोक्षीरपांडुर सोमसौम्योभवास्माकं सर्वदातेनमोनमः ५ इति ० अथमंगल
शांति १० स्वात्याभंगारकंगदस्यक्षमायांनक्तभोजने क्षमाभूः सप्तमेत्वथसंप्राप्ते हैमंताम्रेनिवेश्यवै रक्तवस्त्रपुगच्छन्नंकुंकुमेना
नुलेपितं निवेद्यभक्तकंसारंपुष्पधूपाक्षतादिभिः २ होमघृततिलैः कुर्यात्कुजनाम्नाचमंत्रवित् शमिधोष्टोत्तरशतमष्टावि
शतिरेववा ३ होतव्यामधुसर्पिर्भ्यांदध्नाचैवघृतेनच मंत्रेणानेनतंदद्याब्राह्मणायकुटुंबिने ४ कुजकुप्रभवोपित्वंमंगलःप
रिपठ्यसे अमंगलंनिहत्वासुसर्वदापच्छमंगलं ५ एवंकृतेभौमकृतंदुःकृतंशांतिमाप्नुयात् कर्तव्यंभौमपीडासुतस्मात्प्रय
त्नमानसैः ६ इतिः ० अथबुधशांति ० विशाखासुबुधंगत्य सप्तनक्तान्यथाचरेत् बुधंहेममयंकृत्वास्थापितंकांश्यभाज
ने १ शुक्लवस्त्रपुगच्छन्नं शुक्लमाल्यानुलेपनं गुडोदनोपसंहारंब्राह्मणायनिवेदयेत् २ बुधत्वंबुद्धिजननोबोधवान्सर्वदा
दानृणां तत्वावबोधंकुरुमेसोमपुत्रनमोनमः ३ होमंघृततिलैः कुर्याद्बुधनाम्नाचमंत्रवित् समिधाष्टोत्तर[illegible]मष्टाविंशति
रेववा ४ होतव्यामधुसर्पिर्भ्यांदध्नाचैवघृतेनच बुधशांतिरियंप्रोक्ताबुधवैकृतिनाशिनी ५ बुधदोषेषुकर्तव्यातयाशां
तिकपोषिके ६ इतिः अथगुरुशांतिः गुरुंचैवानुराधासुपूजयेद्भक्तितोनरः पूर्वोक्तविधियोगेनसप्तनक्तान्यथाचरेत् १ हैमं
हेममयेपात्रेस्थापयित्वाबृहस्पतिं पीतांबरपुगच्छन्नंपीतयज्ञोपवीतिनं २ पादुकोपानहच्छत्रकमंडलुंविभूषितंपूज

जपेत्पीतकुसुमैः कुंकुमेनविलेपितं ३ धूपदीपादिभिर्दिव्यैः फलैः श्चंदनतंदुलैः खंडखाद्योपहारैश्च गुरोरग्येनिवेदयेत्
४ धर्मशास्त्रार्थतत्वज्ञानविज्ञानपारग विबुधार्तिहरंचिंत्यदेवाचार्यनमोस्तुते ५ होमंघृततिलैः कुर्याद्गुरुनाम्नाचमं
त्रवित् शमिधोष्टोत्तरशतमष्टाविंशतिरेववा ६ होतव्यामधुसर्पिभ्यां दध्नाचैवघृतेनव समिधोश्वाश्वत्थस्यरक्तद्भुत
महापुण्यंसर्वपापहरंशुभं ७ तुष्टिपुष्टिकरंन्हृणांगुरुवैकृतिनाशनं विषमस्थेगुरौकार्यमहाशांतिरि [illegible] ८ इतिः अ
थगुरुपूजास्कांदे कन्याविवाहकालेतुशुद्धिर्यस्यानविद्यते ब्राह्मस्याप्युनयनेयस्यस्यादुस्थितंगतः १ दुस्थितंप्राप्तः एभिः पूजा
गुरोः कार्याविधिवद्भक्तिभाविते: मदनीकामपुष्याणिपत्रंपालाशसर्षयाः २ मदंती पृथिका कामोदमनद्रुक्षास्य: गुडुची
वान्यपामार्गविडंगशंखिनीवचा सहदेवीविस्णुक्रांतासर्वौषध्यः सतावरी ३ कुष्टंमांसंहरिद्रेद्वेमुराशैलेयचंदनंवचा
कर्चूरमुस्तुंचसर्वौषध्यः प्रकीर्तिताः ४ तथैवास्वथमृत्तांगांचपंचगव्यंजलंतथा नूतनंसोदकुंभंच पीतवस्त्रसमन्वितं ५ पं
चरत्नैः समायुक्तंईशान्यांस्थापितेनत्नात् याःउषधीतिमंत्रेणसर्वास्त्वस्मिन्विनिःक्षिपेत् ६ कुंभस्योपरिभागेतुस्थापयि
त्वाबृहस्पतिं सुवर्णपात्रेसौवर्णप्रतिमांतुयुधिष्टर ७ कारयेत्तुयथाशक्त्याविज्ञप्राठ्यविवर्जितः पीतवस्त्रयुगछन्नापी
तयज्ञोपवीतिनं ८ पूजयेद्गंधपुष्पाद्यैस्ततोहोमंसमाचरेत् समिधोश्वत्थवृक्षस्यहोतव्याष्टोत्तरंशतं ९ तिलव्रीहियवोन्मि

शां० म० श्रहोतव्यंचयथाक्रमं वृहस्पतेतिमंत्रेणाऋषिछंदःसमन्वतः १० मंत्रेणानेनजुहुयात् ध्यान्यपूर्वंचयत्नतः ततोहोमावसानेतु
४२ पूजयेच्चवृहस्पतिं ११ पीतगंधैस्तथापुष्पैर्धूपदीपैश्चशक्तितः दध्योदनंचनैवेद्यं फलतांवूलसंयुतं १२ मंत्रेणानेनकौंतेय
समभ्यर्च्यपुनःपुनः नमस्तेगिरसांनाथवाक्पतेथवृहस्पते १३ क्रूरग्रहैःपीडितानाममृतायनमोनमः पूजयित्वासुराचा
र्यंपश्चादर्घ्यंनिवेदयेत् १४ गंभीरदृढरूपांगदेवेज्यसुमतेप्रभो नमस्तेवाक्पतेशांतग्रहाणार्घ्यंनमोस्तुते १५ अर्घ्यमंत्रः अ
र्घंदत्वासुरेशायजयहोमंसमापयेत् भक्त्यापतेसुराचार्यहोमपूजादिसंस्कृतं १६ त्वंगृहाणशांत्यर्थंवृहस्पतेनमोन
मः संकल्पमंत्रः मंत्रेणानेनसंकल्प्यपश्चात्संप्रार्थयेन्नृप १७ जीवोवृहस्पतिःसूरिराचार्योगुरुरंगिराः वाचस्पतिर्देवम
त्रीशुभंकुर्यात्सदामम ० १८ प्रार्थनामंत्रः एवंसंप्रार्थयेद्देवं आचार्यंचप्रपूजयेत् सर्वोपचारसंयुक्तांप्रतिमांतांयुधिष्ठिर १९
प्रणम्यचगवायुक्तामाचार्याय निवेदयेत् अथाचार्यस्तुनियतोवेदवेदांगपारगः २० यजमानंसपत्नीकंशांतचित्तंजितेंद्रि
यं कुंभोदकंगृहीत्वानुमंत्रैरेतैःप्रसिंचयेत् २१ इदमापोयमंत्रेणतामग्निश्चऋचस्तथायाओषधीरश्वावतीकूष्मांडैश्चा
भिषिंचयेत् २२ पश्चात्संभोजयेद्विप्रान् यथाशक्त्यायुधिष्ठिर एवंकृत्वागुरोःपूजांसर्वान्कामानवाप्नुयात् २३ संक्रांतावपि
कौंतेयययास्वाभ्युदयेषुच कुर्वन्वृहस्पतेपूजांअभीष्टफलमाप्नुयात् २४ संक्रांतौगुरुसंक्रांतौ ० इतिगुरुपूजा ० अथबु

ऋंतुकारयेत् वंशपात्रे च मंस्थाप्य पूजयेत् सित पंकजैः २ तदभावे सितैः पुष्पैस्तांबूलैः श्चंदनेन च अग्रे तस्य प्रदातव्यं पायसं घृत।
संप्लुतं ३ दद्यादनेन मंत्रेण ब्राह्मणाय कुटुंबिने भार्गवो भर्ग शुक्रस्य भुविः श्रुतिविशारदः ४ हित्वा ग्रहकृतान्दोषान् आयुरा
रोग्यदोस्तु सः होमं घृततिलैः कुर्यात् शुक्रनाम्ना च मंत्रवित् ५ समिधोष्टोत्तरशतमष्टाविंशतिरेव वा होतव्या मधुसर्पिर्भ्यां
दध्ना चैव घृतेन च ६ अथ प्रतिशुक्रादिशांतिः तत्रैव मात्स्ये अथातः शृणु भूपाल प्रतिशुक्रस्य शांतये पात्रा[illegible]ाने च तथा
शुक्रोदये रात्रि शुक्र पूजा प्रकर्तव्या तानि शामय भारत राजते वाथ सौवर्णे कांस्यपात्रेथवा पुनः २ शुक्ल पुष्पांबरयुते श्वेत तंडु
लपूरिते निधाय राजतं शुक्रं शुचि मुक्ताफलान्वितं ३ महाश्वेत सुमा युक्तं साम गायन्निवेदयेत् नमस्ते सर्वलोकेश नमस्ते भ
भृगुनंदन ४ देव सर्वार्थसिध्यर्थं गृहाणार्घ्यं नमोस्तु ते दत्वैवमर्घ्यं कौंतेय प्रणिपत्य विसर्जयेत् ५ एवं शुक्रोदये कुर्यात् यात्रा
दिषु च भारत तद्वद्वाचस्पतेः पूजां प्रवक्ष्यामि युधिष्ठिर ६ सौवर्णे पात्रे सौवर्णममरेशपुरोहितं पीतपुष्पांबरधरं कृत्वाख्य
त्वाथ सर्षपैः ७ पालाशाश्वत्थमंगेन पंचगव्यतिलेन तु भंगः पल्लवः पीतांगरागवसनो घृतहोमं तु कारयेत् ८ प्रणम्य तां
ग्रवासाद्वै ब्राह्मणाय निवेदयेत् नमस्ते गिरसां नाथ वाक्पते ते बृहस्पते ९ क्रूरग्रहैः पीडितानाममृतायन मोनमः संक्रां
तावपि कौंतेय पात्रास्त्वभ्युदये शुच १० कुर्वन्बृहस्पतेः पूजां सर्वान्कामानवाप्नुयात् अथवा मौक्तिकान्येव सुरत्नानि दृहंतिवा

शां०म ११भार्गवांगिरसोश्चिंत्यतान्येवप्रतिपादयेत् इतिभुक्त्यादिशांति ० अथशनिराहुकेतुशांतय ० भविष्येशनैश्चरं राहुकेतूंलौह
४३ पात्रेषुनिःक्षिपेत् कृत्वागरुस्मृतो धूपोदक्षिणाचस्वशक्तितः १ यथाक्रमंशमीदूर्वाकुशानांसमिधःस्मृताः सप्तमेतत्वयसंप्राश्नि
नृवर्णान्वाथकारयेत् २ कृष्णवर्णायुगछन्नमेकैकंकारयेद्बुधः मृगनाभ्यासमालभ्यकृशरान्विनिवेद्यच ३ होमावसानेतत्स
र्वंब्राह्मणायोपपादयेत् शनैश्चरनमस्तेस्तुनमस्तेराहवेतथा ४ केतवेचनमस्तुभ्यंसर्वेशांतिंप्रयच्छत एवंकृतेभवेद्यतु
तन्निवोधनृपोत्तम ५ यदिमौमारतिस्थितोभास्करोराहुणासह केतुश्चमूर्तौतिष्ठतिसर्वेपीडाकराग्रहाः ६ अनेनकृतमा
त्रेणसर्वेसाम्यंतुपद्रवाः इतिशन्यादिशांतिः ० भविष्योत्तरेततोमंदस्यदिवसेस्नानमभ्यंगपूर्वकं कार्यंदेयंचविप्रायतैल
मभ्यंगहेतवे १ यस्तुसंवत्सरंयावत्प्राप्तेशनिदिनेनरः तैलंददातिविप्राणांस्वशक्त्याभ्यज्यतेपिवा २ ततःसंवत्सरस्यांते
प्राप्तेतस्यदिनेपुनः लौहंघटार्पितंसौरिंतैलकुंभ विनिःक्षिपेत् ३ लौहेवाम्रणमयेवाथकृष्णवस्त्रयुगान्वितं कृष्णगो
दक्षिणायुक्तंकृष्णकंवलशोभितं ४ स्वयमभ्यंगतःस्नात्वाकृष्णपुष्पैस्तमर्चयेत् सुगंधिगंधपुष्पैश्चकृशरान्नैस्तिलोदनैः
५ पूजयित्वास्तुर्यपुत्रंक्षमस्वेतिपुनःपुनः कृत्वायद्विजमुख्यायतदभावेनरायच ६ देयःशनैश्चरोभक्त्यामंत्रेणानेनवैद्विज
७ क्रूरावलोकनवशाद्भुवनेनामोतियोग्रहोरुष्टः तुष्टोधनकसुखंददातिसौम्यान् शनैश्चरःपातुः ८ यःपुनर्नष्टराज्यायन

रायपरितोषितः स्वप्ने ददौ निजराज्यं स मे सौरिः प्रसीदतु ९ कोणं नीलांजनप्रख्यं मंदचेष्टाप्रसारिणं छायामार्तंडसंभूतं न
मस्यामि शनैश्चरं १० नमोर्कपुत्राय शनैश्चराय नीहारवर्णांजनमेचकाय श्रुत्वा रहस्यं भवकामदश्च फलप्रदो मे भव
सूर्यपुत्र ११ नमोस्तु प्रेतराजाय कृष्णदेहाय वै नमः शनैश्चराय क्रूराय शुद्धबुद्धिप्रदायिने १२ य एभिर्नामभिः स्तौति त
स्य तुष्टिं ददात्यसौ तदीयं तु भयं तस्य स्वप्नेपि न भविष्यति १३ स्कांदे श्रावणे मासि संजाते शोभने शनिवासरे लोहस्यं
शनिं कृत्वा स्नाप्य पंचामृतेन वै १४ पुष्पैरष्टविधैर्धूपैः फलैश्चैव विशेषतः नामभिः पूजयेदेतैः क्रमेणाग्रहं सत्तम १५ को
णस्तु पिंगलो बभ्रुः कृष्णो रौद्रोंतको यमः सौरिः शनैश्चरो मंदः पिप्पलादेन संस्तुतः १६ शन्नोदेवीति सर्वत्र वैदिकेन व
दृजपेत् पूजयित्वा च नैवेद्यं ततः कुर्यात्क्रमेण तु १७ समाषभक्तं प्रथमे द्वितीये पायसं शुभं ततोपेत्वं विलीकार्या चतु
र्थे पूरिका शुभा १८ अं विलीतक्रतंडुलपिष्टादिनिर्मितो लेह्यविशेषः ० इति शनिव्रतं ० अथ शनिस्तोत्रं ० ततः कृतांज
लिर्भूत्वा स्तुतिं चक्रे स बालकः पिप्पलादो द्विजश्रेष्ठः प्रणिपत्य मुहुर्मुहुः १ नमस्ते कोणसंस्थाय पिंगलाय नमोस्तु ते
नमस्ते बभ्रुरूपाय कृष्णाय च नमोस्तु ते २ नमस्ते रौद्रदेहाय नमस्ते चांतकाय च नमस्ते यमसंज्ञाय नमस्ते सौरये विभो ३
नमस्ते मंदसंज्ञाय शनैश्चर नमोस्तु ते प्रसादं कुरु देवेश दीनस्य प्रणतस्य च ४ शनैश्चर उवाच परितुष्टोस्मि ते वत्स स्तो

श्री.सं. त्रेणानेनसांप्रतं वरं वरयभोवत्सयेनप्रच्छामिवांछितं ५ पिप्पलादउवाच अद्यप्रभृतिनोपीडाबालानांरविनंदन त्वयाका
४४ र्यामहाभागनस्वकीयाकथंचन ६ यावद्वर्षाष्टकंजातंममबाल्येनसूर्यज स्तोत्रेणानेनयोन्यस्त्वां ब्रूयात्स्मातरुपस्थितः॥
तस्यपीडानकर्त्तव्यात्वयाभास्करनंदन तस्यपीडानकर्त्तव्यारेयोलाभोमहाभुज अर्द्धाष्टमिकयायोगेतावकेसंस्थितेनरः ७
सार्द्धसप्तवर्षपर्यंतंद्वादशजन्मद्वितीयराशिभिर्यःशनैश्चरयोगःसोर्द्धाष्टमिकयोगइत्युच्यते ८ तववारेतुसंप्राप्तेयस्तिलान्
लोहसंपुतान् शक्त्याददातिनोतस्यपीडाकार्यात्वयाविभो ९ कृष्णांगांयस्तुविप्रायतवोद्देशेनयच्छति अर्द्धाष्टमिकयापी
डातस्यकार्यात्वयानघ १० शमीसमिद्भिर्होमोयंतवोद्देशेननिर्वपेत् तथाकृष्णतिलैश्चैवतुथाकृष्णानुलेपनैः ११ पूजांकरो
तियस्तुभ्यंधूपंवागुग्गुलंदहेत् कृष्णवस्त्रेणसंवेष्ट्यत्याज्यातस्यत्वयाव्यथा १२ सूतउवाच एवमुक्तःशनिस्तेनबाढमित्येवतज्ञ
स्यच नारदसमनुज्ञायजगामनिजसंश्रयं १३ इतिशनैश्चरशान्तिः ० अथार्कविवाहः प्रयोगरत्ने तृतीयांमानुषीं नैवचतुर्थीं
यःसमुद्वहेत् पुत्रपौत्रादिसंपन्नःकुटुंबीसाग्निकोनरः १ उद्वहेदितिसिध्यर्थंतृतीयांनकदाचन मोहादज्ञानतोवापियदिगच्छे
तुमानुषीं २ नश्यत्येवनसंदेहोगर्गस्यवचनंयथेति तत्रैवसंग्रहे तृतीयांयदिचोद्वाहेत्तर्हिसाविधवाभवेत् ३ चतुर्थादि
विवाहार्थंतृतीयेर्कंसमुद्वहेत् आदित्यदिवसेवापिहस्तर्क्षेवाशनैश्चरे ४ शुभेदिनेवापूर्वाह्णेकुर्यादर्कविवाहकं व्यासःस्त्रा

स्नातंकृतवासास्सुरक्तगंधादिभूषितं ५ सपुष्पंफलंशाखैर्वा अर्कगुल्मंसमाश्रयेत् सत्वक्षरोनसंयुक्तं अर्कंसंस्थाप्यपत्नतः ६
अर्ककन्याप्रदानार्थमाचार्यंकल्पयेत्सुरां अर्कसंनिधिमागत्यतत्रस्वस्त्यादिवाचयेत् ७ नांदीश्राद्धंहिरण्येन अष्टवर्गान्प्रपूज
येत् पूजयेन्मधुपर्केणवरं विप्रस्यहस्ततः ८ यज्ञोपवीतंवस्त्रंचहस्तकर्णादिभूषणं उष्णीषंगंधमाल्यादीवर्णयास्मैप्रदा
पयेत् ९ स्वशाखोक्तप्रकारेणमधुपर्कंसमाचरेत् बाह्ये ग्रामात्प्राच्यांवासुपुष्पफलसंयुतं १० परीक्ष्यपत्नतोधस्तमश्वत्थडि
लादिपंथाविधि कुर्यादितिशेषः कृत्वार्कंपुरतस्तिष्ठन्प्रार्थयेत्तद्द्विजोत्तमः ११ त्रिलोकवासिन्सप्ताश्वछाययासंहितोरवे तृ
तीयेद्वाहजंदोषंनिवारयसुखंकुरु १२ तत्राध्यारोप्यदेवेशंछाययासहितंरविं वस्त्रैर्माल्यैस्तथागंधैस्तन्मंत्रेणैवपूजयेत् १३
तत्रैवश्वेतवस्त्रेणतथाकार्पासतंतुभिः १४ गंधपुष्पैःसमभ्यर्च्यतल्लिंगैःरभिषिंचयेत् १४ गुडोदनेनतुनैवेद्यंताम्बूलंच समर्प
येत् प्रासः अर्कंप्रदक्षिणीकुर्वन्जपेन्मंत्रमिमंवुधः १५ ममप्रीतिकरायेयंमयासृष्टापुरातनी अर्कजाब्रह्मणासृष्टा अस्मा
कंपरिरक्षतु १६ पुनः प्रदक्षिणीकुर्यान्मंत्रेणानेनमंत्रवित् नमस्तेमंगलेदेविनमःसवितुरात्मजे १७ त्राहिमांकृपयादेवि प
त्नीत्वंमेइहागता अर्कत्वंब्रह्मणासृष्टः सर्वप्राणिहितायच १८ वृक्षाणामादिभूतस्त्वंदेवानांप्रीतिवर्द्धनः तृतीयोद्वाह
जंपापंमृत्युंचाशुविनाशय १९ ततश्चकन्यावरणंत्रिपुरुषंकुलमुच्चरेत आदित्यःसविताचार्कःपुत्रीपौत्रीचनप्त्रिका २०गो

शो॰ म॰ त्रंकाश्यपमित्युक्तं लोके लौकिकमाचरेत् सुमुहूर्ते निरीक्षे तु स्वस्तिसूक्तमुदीरयन् २१ आशीर्भिः सहितैः कुर्यादाचार्यप्रमुखैर्द्विं
४५ जैः अथाचार्यं समाहूय विधिना तन्मुखाश्वता २२ परिगृह्य ततो होमं गृह्योक्तविधिनाचरेत् व्यासः अर्ककन्यामिमां विप्र यथाशक्ति
विभूषितां २३ गोत्राय शर्मणे तुभ्यं दत्तां विप्र समाश्रयेत् अंजल्यक्षत कर्माणि कृत्वार्ककरणपूर्वकं २४ यावत्संवाहृता सूत्रेणाव
र्ककं प्रवेष्टयेत् स्वशाखोक्तेन मंत्रेण गायत्र्या वाथवा जपेत् २५ पंचीकृत्य पुनः सूत्रं स्कंधेव धाति मन्त्रतः वृहत्सामेति मंत्रेण सू
त्रैरक्षां प्रकल्पयेत् २६ अर्कस्य पुरतः पश्चाद्दक्षिणोत्तरतस्तथा कुंभांश्च निक्षिपेत्पश्चादाग्नेयादिचतुष्टये २७ सवस्त्रं प्रतिकुंभं
च त्रिसूत्रैर्गोचवेष्टयेत् हरिद्रागंधसंयुक्तं पूरयेच्छीतलं जलं २८ प्रतिकुंभं महाविष्णुं संपूज्य परमेश्वरं पाद्यार्घ्यादि निवेद्या
तं कुर्यान्नाम्नैव मंत्रवित् २९ अत्र शौनकोक्तहोमप्रकारः ॥ तृतीये स्त्रीविवाहे तु संप्राप्ते पुरुषस्य तु अर्कविवाहं वक्ष्यामि शौ
नकोहं विधानतः १ अर्कसंनिधिमागत्य तत्र स्वस्त्यादि वाचयेत् नांदीश्राद्धं प्रकुर्वीत स्थंडिलं च प्रकल्पयेत् २ अर्कमभ्य
र्च्य सौर्यां च गंधपुष्पाक्षतादिभिः सौर्यां सूर्यदेवत्यया ऋचा आकृष्णेनेत्यनया स्वयंवालंकृतस्तद्वद्वस्त्रमाल्यादिभिः शुभैः ३
अर्कस्योत्तरदेशे तु समन्वारब्धया तया एतया अर्ककन्याया उल्लेखनादिकं कुर्यादाघारांतमतः परं ४ आज्याहुतिं च जुहुया
त्संगोभिरनपेक्षया कस्मै त्वा कामकामाय स्येतनयचां ततः परं ५ प्रस्ताभिश्च समस्ताभिस्ततश्च स्विष्टकृद्भवेत् परिषेचनपर्य

तमयास्त्वित्यादिकं क्रमात् प्रार्थनादिमंत्रादि विशेषमाह व्यासः पुनः प्रदक्षिणांकृत्वा मंत्रमेतमुदीरयेत् मयाकृतमिदंकर्म स्थावरे
षु जरायुणा अर्कोपस्थानिनो देहि तत्सर्वं क्षंतुमर्हसि इत्युक्त्वा शांतिसूक्तानि जप्त्वा तं विसृजेत्पुनः गोयुग्मं दक्षिणां दद्यादा
चार्याय च भक्तितः इतरेभ्यश्च विप्रेभ्यो दक्षिणां चापि शक्तितः तत्सर्वं गुरवे दद्यात्ते पुण्याहमाचरेत् अथ प्रयोगः तृती
यविवाहः स्वाग्दिनं चतुष्टयाधिकव्यवहिते रविवारे शनिवारे हस्तनक्षत्र शुभे दिनांतरे वा ग्रामात्प्राच्यामुदीच्यां वा पुष्पफल
युतार्कादधस्तात्स्थंडिलं कृत्वार्कपश्चिमतउपविश्य मासपक्षाद्युल्लिख्य मम तृतीयमानुषीविवाहजदोषापनुत्यर्थं अर्कविवा
हं करिष्य इति संकल्प्य गणेशपूजास्वस्तिवाचनमातृपूजनवृद्धिश्राद्धाचार्यवरणानि कुर्यात् तत्र वृद्धिश्राद्धे हेम्ना० अथा
चार्येण पूजितो वरः त्रिलोकवासिन् सप्ताश्वच्छायया सहितो रवे तृतीयोद्वाहजं दोषं निवारय सुखं कुर्वित्यर्कं संप्रार्थ्यार्कं
आकृष्णेनेति छायासहितं रविमावाह्य श्वेतवस्त्रसूत्राभ्यामावेष्ट्य संपूज्यापो हिष्ठेत्यादिभिरभिरभिषिंच्य गुडोदनंता
म्बूलादि समर्थ्य प्रदक्षिणां कुर्वन्मम प्रीतिकरायेयं मया सृष्टा पुरातनी अर्कजा ब्राह्मणा सृष्टा अस्माकं प्रतिरक्षत्विति
पठेत् द्वितीयप्रदक्षिणायां तु नमस्ते मंगले देवि नमः सवितुरात्मजे ॥ त्राहि मां कृपया देवि पत्नी त्वं मे इहागता अ
र्क त्वं ब्रह्मणा सृष्टः सर्वप्राणिहिताय च वृक्षाणामादिभूतस्त्वं देवानां प्रीतिवर्धनः ॥ तृतीयोद्वाहजं पापं मृत्युं चाशु विना

शां.प्र. शयेति. ततआचार्येणमासपक्षाद्युल्लिख्यकाश्यपगोत्रामादित्यस्यपुत्रींसवितुःपौत्रींअर्कस्यप्रपौत्रीं [illegible]
५६ त्के वरः स्वस्तिनइंद्रोवृद्धश्रवा इतिसूक्तंपठन्नर्कंनिरीक्षेत ततआचार्योविप्रैःसहाशिषोदत्वामुकगोत्रायामुकशर्मणे
संप्रददे इत्युक्त्वाकन्यांदत्वार्ककन्यामिमांविप्रयथाशक्तिविभूषितां गोत्रायशर्मणेतुभ्यंदत्तांविप्रसमाश्रयेति पठेत् वर
स्तुयत्तोमेकामःसमृद्धतामिति प्रथमोधर्मोमे इतिद्वितीयां यशोइतितृतीयामिति त्रीनक्षतांजलीनर्कोपरिक्षिप्त्वाग्रा
ह्यापरित्वेत्यादिनावापंचावृत्तासूत्रेणार्कमावेष्ट्यतत्सूत्रंपंचगुणंकृत्वार्कस्यस्कंधेवध्वा।।वृहत्सामेतिरक्षांपरिकल्प्य।
अर्कस्यदिक्षुविदिक्ष्वष्टौकुंभान् संस्थाप्यवस्त्रेणात्रिसूत्रेणचावेष्ट्यहरिद्रागंधाद्यैःततःक्षिप्त्वातेषुनाम्नाविष्णुमावाह्यषोडशो
पचारैःसंपूज्यस्थंडिलेग्निंप्रतिष्ठाप्यआघारावाज्येनेत्यंतमुक्त्वाअप्रधानंवृहस्पतिमग्निवायुसूर्यप्रजापतिंचाज्येनशेषेणे
त्याद्युक्त्वाघारांतेसंगोभिरंगिराबृहस्पतिस्त्रिष्टुप् अर्कविवाहहोमेविनियोगः ॐ संगोभिरंगिरसोनक्षमाणोभगइवे।
दर्यमणंनिनाय जनेमित्रोनदंपतीअनक्तिबृहस्पतेवाजयाशूरिवाजौस्वाहा वृहस्पतयइदंनममेतित्यजेत् यस्मैत्वाप्र
मद्देवोग्निस्त्रिष्टुप्विनियोगःप्राग्वत् ॐ यस्मैत्वाकाममकामायवयंसम्राड्यजामहे तमस्मभ्यंकामंदत्वाथेदंघृतंपि
बस्वाहा अग्नयइदं ततोव्यस्तव्याहृतिभिर्हुत्वास्विष्टकृदादिकर्मशेषंसमाप्यार्कंप्रदक्षिणीकृत्यमयाकृतमिदंकर्मस्थावरे

पूजरणपुरणा अर्कापत्यानिनोदेहितत्सर्वं क्षंतुमर्हसीति प्रार्थ्याचार्यायगोयुग्ममन्येभ्यश्चविप्रेभ्योयथाशक्तिदक्षिणांदत्वा
शांतिसूक्तंजपित्वापूजोपकरणान्याचार्यायदत्वादिनचतुष्टयमग्निं कुंभांश्चरक्षेत कुंभेषुमहाविष्णुंपूजयेच्च पंचमदिन
कृत्संस्नाह्ल चतुर्थेदिवसेतोतेपूर्ववत्तांप्रपूज्यचविसृज्यहोममग्निंचविधिनामानोषीपरा उद्वहेदन्यथानैवपुत्रपौत्रस
मृद्धिमान् इतिश्रीभट्टनीलकंठकृतेभास्करेशांतिमयूखेअर्कविवाहः अथरजोदर्शनशांति नारदः कुलीरसिंहवृषमेषाचाप
त्यनृषुक्कन्यातुलाघटाः राशयः शुभदाज्ञेयानारीणांप्रथमार्तवे कुलीरःकर्कटःचापधनुःअंत्योमीनःनृयुग्मिथुनंघटःकुं
भःस्मृतिचंद्रिकायां शुक्लपक्षेसुशीलास्यात्कृष्णेसाकुलटाभवेत् कृष्णस्यदशमीयावन्मध्यमंफलमादिशेत् तथातत्रैव॥
अमारिक्ताष्टमीषष्ठीद्वादशीप्रतिपत्स्वपि परिघस्यचपूर्वार्धेव्यतीपातेचवैधृतौ संध्यासूपप्लवेविष्ट्यामशुभंप्रथमार्तवं
रोगीपतिव्रतादुःखीपुत्रीराणीभोगभोगिनी पतिव्रताक्लेशयुक्तासूर्यवारादिषुक्रमात् कश्यपस्तु अष्टमीषष्ठ्यमारिक्ताद्वा
दशीषुक्रमेपिवा वैधृतौवव्यतीपातेग्रहणेचंद्रसूर्ययोः विष्ट्यांसंध्यासुनिद्रायांदुर्भगाप्रथमार्तवे नक्षत्रफलमाहगर्गः॥
शुभगाचैवदुःशीलावंध्यापुत्रसमन्विता धर्मयुक्ताव्रतपरीचपरसंतानमोदिनी सुपुत्राचैवदुःपुत्रापितृवेश्मरतासदा॥दी
नाप्र ज्ञावतीचैवपुत्राल्याविचकारिणी साध्वीपतिव्रतानित्यासुपुत्राकष्टचारिणी स्वकर्मनिरताहिंसापुण्यापौ

त्रादिसंयुता नित्यंधनकयासक्ता पुत्रधान्यसमन्विता सूर्खीर्था स्यागुणवती दस्रर्क्षादेः क्रमात्फलं स्मृतिरत्ने शुभं चैव दुष्टू
वौन्हे मध्यान्हे मध्यमं फलं अपरान्हे तु वैधव्यं पूर्वरात्रे शुभं भवेत् मध्यरात्रे तु मध्यं स्यात्पररात्रे शुभान्विता कश्यपः मलिना
मंदवारे स्याद्वारा त्रावपितथैव चेति स्मृत्यंतरे मध्यान्हे तु भवेत्संध्या निशीथे विधवा भवेत् तथा अमासंक्रांतिविष्ट्यावव्यती
पाते च वैधृतौ परिघस्य तु पूर्वार्द्धे षट्षष्ट्यगंडातिगंडयोः व्याघाते नव शूले तु नाड्यः पंच तु दर्शने वैधव्यमर्थहानिं च सुतना
शमहद्भयं वैधव्यं शत्रुवृद्धिं च दारिद्र्यं क्षीणजीवनं तेजोहानिं समापाति सदा पुष्पवती क्रमात् स्थानभेदे फलभेदमाह
सिष्टः ग्रामाद्बहिः परग्रामे चेत्स्याद्व्यभिचारिणी पतिव्रता पतिस्थाने सुशीला गृहमध्यके ग्राममध्ये तु वृद्धिश्च विधवा च
दिगंबरा परागारे च दुःशीला आपुष्पं जलसंनिधौ वनमध्ये तु कंन्याया धनधान्यसमृद्धिदा परागारइत्यनेनैव पितृगृहं
निषिद्धं तथा च शिष्टाचारः विशेषनिषेधस्तु न दृश्यते तथा चंद्रे सद्गुणसंयुक्ते देवराजमतात्शुभं शावाशौचेप्यशु
भमितिगुरवः वस्त्रफलमाह वसिष्टः सुभगा श्वेतवस्त्रा स्यात् दृढवस्त्रा पतिव्रता क्षौमवस्त्राक्षितौ शास्यान्नववस्त्रा सुखा
न्विता दुर्भगा जीर्णवस्त्रा स्याद्रोगिणी रक्तवाससा नीलांवरधरा नारी विधवा पुष्पिता यदि मलिनांवरतो नारि दरिद्रा
स्याद्गजस्वपा रजोविंदुफलमाह स एव वस्त्रेस्वर्विषमारक्तविंदवः पुत्रमाप्नुयात् समाश्चेत्कंन्यका चेति फलं स्यात्प्रथमार्त्त

यै देवराजः संमार्जनीकाष्टतृणाग्निशूर्पान्हस्तेदधानाकुलटायदास्यात् तुल्योपभोगेनपतिस्थितावेदृष्टंरजोभाग्यवतीतदा॥
त् नारदः तीथ्यर्क्षवाराणियाश्चेत्दोषंफलंनिवारयेत् दोषाधिकेगुणाल्पत्वेतत्तथापिनकारयेत् दोषाल्पत्वेगुणाधिकेय॥
द्दोषकर्मसमाचरेत् निंद्यर्क्षतिथिवारेषुयदिपुष्पंप्रदृश्यते तत्रशांतिं प्रकुर्वीतघृतदूर्वातिलाक्षतैः प्रत्येकं शतमष्टौच
गायत्र्याजुहुयात्ततः स्वर्णगोभूतिलान्दद्यात्सर्वदोषापनुत्तये भर्तातत्राभिगमनंवर्जयेत् शास्त्रदर्शनात् वसिष्ठोपि प्र
भूतदोषयदिदृश्यतेतत्पुष्पंततः शांतिककर्मकार्यं विवर्जयेद्देवतदेकशय्यांयावद्रजोदर्शनमंत्यघस्ते शौनकः आर्तवानां
तुनरीणांशांतिं वक्ष्याभिशौनकः तिथिवारर्क्षसंयोगेभ्योलग्नेचसनवांशके ग्रहेभ्योदुःस्थितेभ्यः श्चतत्तद्दोषक्षयायच अ
न्नपुत्रपुस्यलाभायदंपत्योरभिवृद्धये पंचमेन्हि चतुर्थेवाग्रहयज्ञपुरस्सरं तस्मिन्नहनिकर्तव्यमृतुहोमविधानतः आ
चार्यंवरयेत्स्नातभुवनेश्वरितुष्टये होमार्थंचजपार्थंचवरयेदृत्विजोवहून यजमानोद्विजैः सार्धंशांतिहोमंसमाचरेत्॥
गृहांर्दीशानदिग्भागेदेवतापूजनायच द्रोणप्रमाणधान्येनव्रीहिराशित्रयंभवेत् कुंभत्रयंन्यसेद्राशौतंतुवस्त्रादिवेष्टितं
पूरयेत्तीर्थसलिलैः प्रतिकुंभंपृथक्पृथक् सूक्तेनाथनवर्चेनप्रसुवआपइत्यथ ऋचायाः पावतस्तद्द्वायन्त्राचततःकुं
मात् मध्यकुंभेक्षिपेद्धान्यंऔषधानिचहेमच ततश्चपंचरत्नानिगंधपुष्पाक्षतायुतान् औषधानिचवक्ष्यंतेमुनिभिः शां

शां·म तिकारणात् औदुंबरंकुशादूर्वाराजिकंचंपविल्वकाः विष्णुक्रांताथतुलसीवर्हिषंशंखपुष्पिका शक्रचर्माश्वगंधाचनिर्गुंडिस
४८ र्षपद्वयं अपामार्गपलाशश्चपनसोजीवकस्तथा प्रियंगवाश्चगोधूमाव्रीहयोश्वत्थएवच क्षीरंचदधिसर्पिश्चश्रीपर्णींच
वत्तथोत्पलं कुरंटकश्चगुंजाचवचामुस्तकभद्रका इति द्वात्रिंशद्दोषधानीहगायत्र्यासर्वमाहरेत् गजाश्वरथवल्मीकसं
गमाद्ध्रदगोकुलात् राजद्वारप्रदेशाच्चमृदमानीयनिक्षिपेत् कुंभस्थापनमित्याह ततन्मंत्रेणाकारयेत् मृत्तिकाचौषधादीं
निमंत्रेप्रक्षिपेत्क्रमात् कुंभोपरिन्यसेत्पात्रंकांस्यंवाताम्रमेववा मृण्मयंवेणुपात्रंवास्वस्ववितानुसारतः पात्रोपरिन्यसेद्वस्त्रप्रतिमां
भुवनेश्वरीं तन्मस्त्यवान्यसेत्पात्रंइंद्राणींचपुरंदरं आचार्यःपूजयेद्देवीमंगाघावरणानिच अन्योवापूजनंकुर्याद्गायत्र्या
मंत्रसारपा इंद्राणींपूजयेद्देवीइंद्राणीमासुनारिषु क्रमेणापूजयेदिंद्रमिंद्रत्वावृषभंवयं अनेनविधिनाचाथपूजयेद्देवता:
त्रयं आवाहनादिसकलैरुपचारैःपृथक्पृथक् तन्मध्यमस्पृशन्कुंभंमंत्रेणभुवनेश्वरी जपेदाचार्य आहोमाद्भूसू
क्तंचजपेत्ततःस्पृशन्वैदक्षिणंकुंभंऋत्विगेकोजपेदथ चत्वारिरुद्रसूक्तानिचतुर्मंत्रोत्तराणिच संस्पृशन्नुत्तरंकुंभंश्री
रुद्रंरुद्रसंख्यपा शन्नइंद्राग्नीसूक्तंचतत्रचैवस्पृशन्जपेत् कुंभस्यपश्चिमेदेशेप्राप्तिहोमंसमाचरेत् अन्वाधानंततःकुर्या
द्धोमतंत्रंसमारभेत् पूर्णपात्रनिधानांतंकृत्वाकर्यद्विजैःसह दूर्वाभिस्तिलगोधूमैः पायसेनघृतेनच पायसंश्रपयेत्तत्रसा

विश्वंचहविश्वतत् कृत्वाज्यभागपर्यंतंहविरुद्वासनादिकं तिस्रभिश्चैवदूर्वाभिरेकैकाचाहुतिर्भवेत् अभिमंत्रप्रयुक्ताभिर्गा
यत्रींजुहुयात्क्रमात् अष्टोत्तरसहस्रंतुशतमष्टोत्तरंतुवा तिलमिश्रैश्चगोधूमैर्द्वंद्वेणाज्याहुतीर्हुनेत् जुहुयात्साधसेनै
वआज्येनवहुनेत्क्रमात् हविश्चतुष्टयेनैवप्रत्येकंशतसंख्यया गायत्र्यैवतुहोतव्यंहविरत्रचतुष्टयं ततः स्विष्टकृतंहुत्वा
रज्जुप्रहरणंतथा अयाश्चेत्यादिभिर्हुत्वासमुद्रादूर्मिसूक्ततः सततामाज्यधारांतांपूर्णाहुतिंतपा[illegible]रेत् [illegible]स्वेचवप्र्यंतं
होमशेषंसमापयेत् महौषधिस्थितैस्तत्रप्रतिकुंभस्थितोदकैः ऋतुमत्साःस्विपाशांतिदंपतिभ्यांसुखावहं अथाभिषेक
मंत्राश्चप्रोच्यंतेशौनकादिभिः त्र्यंवकेणचमंत्रेणजातवेदसएकया समुद्रज्येष्ठइत्यादिचतुर्भिश्चप्रसिद्धकैः त्र्यापंतामिति
मंत्रैश्चत्रिभिश्चापियथाक्रमं इमाआपस्तच्चैनैवदेवस्यत्वेतिमंत्रतः मंत्रेणाथतमीशानंत्वमग्नेरुद्रइत्यथा तमुष्टुहीतिमं
त्रेणभुवनस्यपितुस्तथा यातेरुद्रेमंत्रेणशिवसंकल्पमंत्रतः इंद्रत्वावृषभंवयंमंत्रैश्चैवाभिषेचयेत् सात्ववस्त्रांतरंधृत्वापु
नश्चैवोपवासिनी उपवासोत्रसमीपावंस्थानं विप्रानभ्यर्च्यविधिवद्गंधपुष्पाक्षतादिभिः धेनुंपयस्विनींदद्यादाचार्याय
चभूषणैः सदक्षिणमनड्वाहंप्रदद्यादुद्रजापिने ऋत्विग्भ्यश्चाथसर्वेभ्योदद्याद्वैदक्षिणांततः महाशांतिंप्रजप्त्वाथविप्रा
शीर्वाचनंततः ब्राह्मणान्भोजयेच्चैवभुंजीयात्स्वजनैसह स्मृतौ ब्राह्मणान्भोजयित्वातदैवज्ञभोजनम् ततःएवंयःकुरुतेशांति

तु
शां म शौनकोक्तप्रकारतः तदानिष्टं सकलं सर्वं वापि विनश्यतीति इति शौनकोक्तरजोदर्शनशान्तिः अथप्रयोगः कर्त्ता देशकालौ
४९ स्मृत्वा मम पत्न्याः प्रथमरजोदर्शने अमुकदुष्टमासादिसूचितारिष्टनिरसनार्थं शान्तिं करिष्य इति संकल्प्य गणेशपूजन
स्वस्तिवाचनमातृकापूजनाभ्युदयिकाचार्यर्त्विग्वरणानि कुर्यात् अथाचार्यो गृहे प्राग्न्यां प्रत्येकं मंत्रावृत्त्या पदार्थानु
समयेन कुंभत्रयं स्थापयेत् तद्यथा महीद्यौरिति मध्ये तद्दक्षिणोत्तरतश्च भूस्पृष्ट्वा ॐ ओषधय इति स्पर्शक्रमेण तेषु स्था
नेषु द्रोणप्रमाणान् व्रीहीन् राशीकृत्य तेनैव क्रमेण राशित्रये आकलशेष्विति कुंभत्रयं संस्थाप्य मध्ये प्रसुव आप इति न
वऋग्भिः तद्दक्षिणे याः प्रवत इत्यृचा तदुत्तरे गायत्र्या जलं क्षिप्त्वा त्रिष्वपि गंधद्वारामिति गंधयाः ॐ ओषधीरिति सर्वौष
धी ओषधयः सममिति यवान्क्षिप्त्वा मध्य एव यवव्रीहितिलमाषकंगुश्यामाकमुद्गान् क्षिप्त्वोदुंबरकुशदूर्वा
रक्तोत्पलचंपकविष्णुक्रांतातुलसीबर्हिषशंखपुष्पी शतावर्यश्वगंधानिर्गुंडीरक्तपीतसर्षपापामार्गभल्लाशणपेन
सजीवकप्रियंगुगोधूमव्रीह्यश्वत्थदधिदुग्धघृतपद्मपत्रनीलोत्पलसितरक्तपीतकुरंटकगुंजावचाभद्रकमुस्तकास्था
निद्रात्रिंशदौषधानि यथासंभवं वा गायत्र्या क्षिप्त्वा त्रिषु दूर्वापंचपल्लवसप्तमृत्तिकाफलपंचरत्नसुवर्णं निक्षिप्त्वा युवा
सुवासा इति सूत्रेण वाससा वा कुंभकंठान्वेष्टयित्वा गंधादिभिरलंकृत्य पूर्णादर्वीति यवादिपूर्णपात्राणि निधाय तेषु

साष्टदलंश्वेतवस्त्रत्रयंतस्यमध्यमेगायत्र्याविश्वामित्रोभुवनेश्वरीगायत्रीभुवनेश्वर्यावाहनेविनियोगः तत्सवितुरिति
भुवनेश्वरीं तद्दक्षिणकुंभेइंद्राणींवृषाकपिरिंद्राणीपंक्तिः इंद्राण्यावाहने० इंद्राणीमास्विति इंद्राणीं उत्तरकुंभेइंद्र
त्राविश्वामित्रइंद्रोगायत्रीइंद्रावाहने० इंद्रत्वेतींद्रंप्रतिमासुस्थाप्यषोडशभिःपंचभिर्वोपचारैरभ्यर्च्य मध्यमेष्टसहस्र
मष्टशतंवागायत्रीश्रीसूक्तंचजपेत् ततएकर्त्विक्दक्षिणकुंभेरुद्रसूक्तानिजपेत् तानिच कद्रुद्रायेतिनवर्चा इमारुद्रा
यतवसइत्येकादशर्चा इमारुद्रायस्थिरधन्वनइतिपंचर्चं आतेपितरितिपंचदशर्चं तमुष्टहीत्येका भुवनस्यपितरंइ
त्येका त्र्यंबकइत्येका आवोराजानइत्येका अथान्यर्त्विगुत्तरकुंभेएकादशावृत्त्यारुद्रसूक्तंशन्नइंद्राग्नीतिपंचदशर्चंसकु
जपेत् कद्रुद्रायेतिनवर्चस्यघोरकण्वोगायत्रीजपे० इमारुद्रायतवसइत्येकादशर्चस्यकुत्सोरुद्रआद्यानवजगत्योंते
द्वेतुष्टुभौजपे० आतेपितरितिपंचदशर्चस्यगृत्समदोरुद्रस्त्रिष्टुप्० इमारुद्रायस्थिरधन्वनेइतिचतसृणांवसिष्ठोरु
द्रस्त्रिष्टुप्जपेविनियोगः तमुष्टुहिभौमोरुद्रस्त्रिष्टुप्० भुवनस्यपितरंऋत्विंद्रस्त्रिष्टुप्० त्र्यंबकंवसिष्ठोरुद्रोनुष्टुप्०आ
वोराजानंवामदेवोरुद्रस्त्रिष्टुप् जपेविनियोगः अथाचार्यःकुंभपश्चिमेग्निंसंस्थाप्यतदीशान्यांग्रहस्थापनादिपूजांतंकृ
त्वातदीशान्यांएकंकुंभंस्थाप्यतद्वरुणमावाहनादिपूजांतंकृत्वान्वादध्यात् तत्रास्मिन्नन्वाहितेग्नावित्यादिचक्षुषीआज्येनेत्य

शां.म. तमुक्त्वाभुवनेश्वरीमिंद्राणीमिंद्रंचप्रत्येकममुकंसंख्यापादूर्वातिलमिश्रगोधूमपायसाज्यैर्ग्रहांश्चामुकसंख्यासमिच्चरुतिला॥
५० ज्यैः प्रोयेणस्विष्टकृत्तमित्यादियक्षइत्यंतमुक्त्वापरिस्तरणाद्याघाराज्यभागांतंकृत्वायजमानेनांगप्रधानदेवताउद्दिश्य
एताभ्यइदंनममइत्युक्तेऽऋत्विग्भिःसहान्वाधानोक्तक्रमेणजुहुयात् अन्येतुगणपत्यैवतुहोतव्यमिह विरत्रचतुष्टय
ततःस्विष्टकृतंहुत्वास्यत्रैंद्राणींद्रयोहोमानभिधानात् नतयोर्होमोन्वाधानेवाकोतेनमित्याहुः परेतुभुवनेश्वरीतस्त
न्न्यूनंसंख्ययाहोमइति ततःस्विष्टकृदादिबलिदानांतंकृत्वासमुद्रादूर्मिरितितृचेनपूर्णाहुतिंहुत्वाप्रणीताविमो॥
कंकृत्वाऋग्भिः सहसभार्यंयजमानंकुंभोदकैरभिषिंचेत् तत्रमंत्राः आपोहिष्ठेतिनवऋचः यएकद्विपदयद्विति
त्रिभिष्टुंदेवेतिच॰ उभयंशृणुवच्चनस्वस्तिदाविशीयइति त्र्यंबकमितिजातवेदसइति समुद्रज्येष्ठाइति ४ ऋचः
त्रोर्यतामिति ३ ऋचःइमाआपइति ३ ऋचः देवस्यत्वेतितिस्रः तमीशानजगतःत्वमग्नेरुद्रइत्येकं यजुः तमुष्टु
हीतिभुवनस्यपितरंयातेरुद्रेयजाग्रतइतिद्वे एतैर्याजुषा इंद्रंत्वावृषभंवयमिऋचः सुरास्त्वामभिषिंचंत्वित्याद्यौ
पौराणाः एवमभिषिक्तः सुस्नातोधृतशुक्लवासाः सपत्नीकोयजमानोग्निमाचार्यादींश्चसंपूज्याचार्यायधेनुंब्रह्मणे
ऋत्विग्भ्यश्चयथाशक्तिदक्षिणांरुद्रजापिनेसदक्षिणामनड्वाहंचभूयसींदत्वाग्रहपीठदेवतानांभुवनेश्वर्यादीनांचोत्त

रपूजांकृत्वायांतुदेवगणा इतिविसृज्याचार्याय प्रतिपाद्य गच्छगच्छेत्याग्निं विसर्जयेत् ततोब्राह्मणाः शांतिं पठेयुः तत्रमंत्राः अ
नोभद्राइति १० स्वस्तिनोमिमीतामिति १५ ऋचंत्वमूषिति ३ ऋचः तच्छंयोरितिच ततोयजमानोद्वादशब्राह्मणान्भोजयित्वा
संकल्प्यवाविमाशिषोगृहीत्वासुहृद्युतोभुंजीत अथचंद्रार्कोपरागकाले आद्यरजोदर्शनेविशेषमाह कर्त्रोक्तकालेमा
सपक्षाद्युल्लिख्यममपत्न्याश्चंद्रस्यसूर्यस्यवाउपरागेप्रथमरजोदर्शनसूचितारिष्टनिरासार्थं शांतिंकरिष्यइति संकल्प्यप्राग्व
दृत्विक्पूजांतंकुर्यात् अथाचार्योगोमयेनोपलिप्तेदेशेपंचवर्णैरष्टदलंकृत्वातत्रश्वेतवस्त्रमुदग्दशंप्रसार्यतत्राप्याप
स्वेतिराजतंचंद्रप्रतिमांसूर्योपरागेतुआकृष्णेनेतिसौवर्णींसूर्यप्रतिमामावाह्यतदुत्तरतः स्वर्भानोरितिसैसींप्रतिमायां
राहुमावाह्य यस्मिन्नक्षत्रेग्रहणंतन्नक्षत्रदेवतांसौवर्णप्रतिमांस्थापयेत् ततन्मंत्रैः प्रणवादिनमोंतैर्नाममंत्रैर्वावाह्य
कांडानुसमयेनषोडशोपचारैः पूजयेत् तत्रचंद्रायहांनक्षत्रदेवतापक्षेग्रनक्षत्रदेवताभ्यः श्वेतानिगंधादीनि सूर्याय र
क्तानिराहवेकृष्णानि ततः पश्चिमतोग्निंप्रतिष्ठाप्य पक्षेग्रहावाहनादिपूजांतंकृत्वान्वादध्यात् तत्रचक्षुषीआज्येनेत्यंत
मुक्त्वाचंद्रसूर्यराहूंश्चामुकसंख्ययासमिदाज्यचरुतिलाहुतिभिः प्रोक्षणेत्यादि समित्सुविशेषः चंद्रर्क्षदेवतयोः पालाशाः
सूर्यस्यार्कः राहोर्दूर्वाःतांचतिस्रएकाहुतिः अथाज्यभागांतंकृत्वायजमानेनद्रव्यत्यागेकृतेन्वाधानक्रमेणर्त्विग्भिः सहहुत्वास्वि

शां॰ स॰ ष्टरुद्रादिपूर्णाहुत्यंतंप्राग्वत् कृत्वैकस्मिंकुंभेजलेपंचगव्यपंचरत्नत्वक्पल्लवसर्वौषधिकल्कदूर्वांकुशान्निक्षिप्यमऋत्विक्दं
५१ पतीपूर्ववदभिषिंचेत् तत्रमंत्राः आपोहिष्ठेतितृचः इमंमेगंगेत्येकातत्त्वायामीत्येक अन्येपिसमुद्रज्येष्ठा। सुरास्त्वामि
त्यादयश्चशेषंपूर्ववत् इतिदुष्टरजोदर्शनशांतिप्रयोगः अथगोमुखप्रसवः गर्गः पित्ररिष्टेसुतारिष्टेमात्ररिष्टेतथैवच
प्रायश्चित्तंतदाकुर्यात्तद्दोषस्यशांतये॰ तादृशनक्षत्रोत्पत्यासूचितेपित्राद्यरिष्टेप्रायश्चित्तमित्यत्रापितत्तदित्यन्वेति देह
लीदीपवत् तत्तद्दोषशांत्यैतत्तत्प्रायश्चित्तंकुर्यादित्यर्थः पूषाश्विनीगरौसार्यमघाचित्रेंद्रमूलभे एषुऋक्षेषुजातस्यकुर्याज्जे
ननंतथा जन्मर्क्षेवात्रिजन्मर्क्षेशुभवारेशुभेदिने कृत्वाभ्यंगादिकंसर्वंगृहालंकारपूर्वकं गोमयेनोपलिप्याथगृहस्यशा
नभागके पंकजंकर्णिकायुक्तंरजोभिःश्वेतवर्णकैः व्रीहींस्तत्रविनिक्षिप्ययथावित्तानुसारतः नवशूर्पेतुतन्मध्येरक्तवा
स्त्रंप्रसारयेत् स्थापयित्वाशिशुंतत्रपुनःसूत्रेणवेष्टयेत् प्राङ्मुखंतमवाक्पादंतिलग[illegible]शिशुं गोमुखंदर्शयित्वातुपु
नर्नीतंतुगोमुखात् विष्णुर्योनीतिसूक्तेनगव्येनस्नपयेच्छिशुंगवामंगेषुमंत्रेणगवांमेगेषुसंस्पृशेत् विष्णोःश्रेष्ठेनमंत्रेणगो
प्रसूतंतुबालकं आचार्यस्तुसमादाययश्चान्मात्रेददेत्तदा माताजघन्यभागस्थाशिशुमानीयतन्मुखात् ततः पित्रेतदादा
द्यात्तोमात्रेप्रदापयेत् वस्त्रस्थाप्यपितापास्यपुत्रस्यमुखमीक्षयेत् गोमूत्रंगोमयंक्षीरंदधिसर्पिश्चसंयुतं आपोहिष्ठादि

भिर्मंत्रैरभिषिंचेततः शिशुं मूर्ध्निचाघ्रायतत्सुत्रंतन्मंत्रेणतदापिता अंगादंगात्संभवसिहृदयादधिजायसे आत्मावैपुत्रन
मासिसजीवशरदः शतं मूर्धन्यत्रिरवघ्रायतंशिशुंस्थापयेत्ततः पुण्याहंवाचयेत्स्वस्त्याब्राह्मणैर्वेदपारगैः दरिद्रायाथवि
प्रायततोग्राममभ्यर्च्यदापयेत् गोवस्त्रस्वर्णधान्यानिदद्यादर्कादितःक्रमात् यथाशक्तिधनंदद्ब्राह्मणेभ्यस्तदापिता ततोहो
मंप्रकुर्वीतस्वस्वशाखोक्तमार्गतः उल्लेखनादिकंकृत्वाज्यभागांतमाचरेत् होमस्यैशानदिग्भागेधान्योपरिशुभंघटं पंच
गव्यघटेस्थाप्यतिलंतत्रविनिक्षिपेत् क्षीरद्रुमकषायांश्चपंचरत्नानिनिक्षिपेत् वस्त्रयुग्मेनसंछाद्यगंधादिभिरथार्चये
त् विष्णुंवरुणमभ्यर्च्यप्रतिमांचविधानतः प्रतिमापक्ष्मणः अग्रेतद्देवस्यहोमविधानात् चकाराच्च यत्तद्ग्रहादिभि
र्मंत्रैः कुंभंस्पृष्ट्वाभिमंत्रयेत् दधिमध्वाज्ययुक्तेनहोमंकुर्याद्विधानतः आपोहिष्ठेतितिसृभिरस्तुमेसोमइत्यर्थे तद्वि
ष्णोः परमंपदमक्षीभ्यांतेथसूक्ततः ऋग्भिरेभिः प्रत्यृचंचाष्टाविंशतिसंख्यया अष्टाक्षश्चाष्टसंख्यवादधिमध्वाज्यसंयु
तं दधिमध्वाज्येतिपुनर्ग्रहणात् आदित्यादिग्रहैरन्वेति। आदित्यादिग्रहाणांचहोमंकुर्यात्समंत्रकं इतिगोमुखप्रस
वविधिः अथप्रयोगः मासपक्षाद्युल्लिख्यास्यशिशोरमुकर्क्षोत्पत्तिसूचितारिष्टशान्त्यर्थंगोमुखप्रसवंकरिष्यइत्युक्त्वा
गणेशपूजनाचार्यवरणंकुर्यात् आचार्योगोमयेनोपलिप्तगृहस्यैशानदिग्भागेश्वेताष्टदलगतव्रीहिस्थशूर्पेरक्तवस्त्रप्र

णार्थं तिलान्विकीर्य तत्र प्राङ्मुखं दक्षिणदिग्गतपादं शिशुं संस्थाप्य सूत्रेणावेष्ट्य गोमुखे संयोज्य मुखात्प्रापंविविंस्य विष्णु
र्योनिमितिसूक्तेन पंचगव्येन शिशुं संस्नाप्य गवामंगेष्विति गां संस्पृश्य विष्णोः श्रेष्ठेनेति शिशुं गृहीत्वा मात्रे दद्यात् माता गोमु
खप्रदेशाच्छिशुमानीय गोपुच्छदेशे पित्रे दद्यात् पिता च मात्रे दत्वा भूमौ वस्त्रे संस्थाप्य तन्मुखं दृष्ट्वा पंचगव्येनापो हिष्ठेति तृचेन र
मिषिंच्यां गादंगादिति त्रिर्मूर्ध्न्याघ्राय पुण्याहं वाचयित्वा गामाचार्याय दत्वा ग्रहप्रीत्यर्थं गोवस्त्रस्वर्णधान्यानि दत्वा भू
यसीं दक्षिणां दद्यात् अथाचार्योऽग्निं प्रतिष्ठाप्य चक्षुषी आज्येनेत्यंते वरुणं आपो हि ष्ठेति तृचेन अप्सु मे सोमइत्यृचा विष्णुन
हिस्नो रित्यृचा यक्ष्महणमक्षीभ्यामिति ग्रहांश्च प्रत्यृचमष्टाविंशत्यष्टान्यतमसंख्यया दधिमध्वाज्यैः शेषेण स्विष्टकृतमित्या
धुत्काज्यभागांतं कृत्वाग्नेरीशान्यां कुंभं संस्थाप्य तत्र पंचगव्यतिलव्रीहिक्षीरदुंनकषायान् क्षिप्त्वा वस्त्रयुग्मेनावेष्ट्य पूर्णपात्रो
परि तद्विष्णोरिति विष्णोस्त्वापामिति वरुणस्याक्षीभ्यामिति यक्ष्मघ्नप्रतिमारभ्यर्च्य यत इंद्रेति षसोभर्गः प्रगाथ इंद्रोगी
र्हत प्रगाथश्छंदः जपे विनियोगः यत इंद्रेति षडृचो तस्वान्वाधानक्रमेणाहुत्वा कर्मशेषं समापयेदिति गोमुखप्रसवप्रयो
गः अथ सदंतोत्पत्ति विष्णुधर्मोत्तरे उपरि प्रथमं यस्य जायंते च शिशोर्द्विजाः द्विजाः दंताः दंतैर्वा सह यस्य स्याज्जन्म भा
र्गवसत्तम मातरं पितरं वाथ खादेदात्मानमेव च तत्र शांतिं प्रवक्ष्यामि तां मे निगदतः शृणु गजपृष्ठगतं बालं नौस्थं वाथ

सर्वगंधैरपिपाठः१

पंचगव्येनरत्नैश्चमृत्तिकाभिश्चभर्गव स्न
पयेद्द्विज तदभावेचसर्वज्ञकांचनेचवरासने सर्वौषधैः सर्ववीजैः सर्वपुष्पैःफलैस्तथा अस्त्रेणाभो
वौषधानिसर्वगंधश्चविनायकस्नपनविधौदर्शिताः स्थालीपाकेनधातारंपूजयेतदनंतरं समाहंचात्रकर्त्तव्यंततोब्राह्मणभो
जनं अष्टमेहनिविप्राणांतथादेयाचदक्षिणाः कांचनरत्नंतगाश्चभुवमागारमेवच इतजन्मनिसामान्येभृगुस्नानमतःपरं॥
भद्रासनेनिवेश्यैनंमूर्ध्निमूलैःफलैस्तथा सर्वौषधैः सर्वगंधैःसर्ववीजैस्तथैवच स्नापयेत्पूजयेच्चात्रवह्निंसोमंसमीरणं प
र्वतांश्चतथाख्यातान् देवदेवंचकेशवं एतेषामेवजुहुयात्घृतमग्नौयथाविधि ब्राह्मणानांतुदातव्यायथाशक्त्यातुदक्षि
णा तज्जस्वलंकृतंवालंमासनेचोपवेशयेत् आसीनस्तूर्यसंतानवीजैः सुस्नापयत्ततः सविप्रवालकानांवत्तैश्चकार्यंचपू
जनं पूज्यश्चविधिनाचार्योब्राह्मणाःसुहृदःस्तथा इतिसद्योमृतिशांतिः अथकृष्णचतुर्दशीजननशांतिः गर्गः कृष्ण
पक्षेचतुर्दश्यांप्रसूतेस्तद्विधःफल चतुर्दशींचषड्भागांकुर्यादाद्यंशुभंमतं द्वितीयेपितरंहंतितृतीयेमातरंस्मृतं चतुर्थेमा
तुलंहंतिपंचमेवंशनाशनं षष्ठेतुधनहानिःस्यादात्मनोवंशनाशनं तस्मात्सर्वप्रयत्नेनशांतिंकुर्याद्विधानतः आचार्योव
रयेद्धीमान्सुत्रशारसमन्वितं स्वकर्मनिरतंशांतंश्रोत्रियंवेदपारगं सर्वालंकारसंयुक्तंसर्वलक्षणसंयुतं वृषभेचसमासीनं
वरदाभयपाणिनं शुद्धास्फटिकसंकाशंश्वेतमाल्यावराद्वृतं त्र्यंवकेनचमंत्रेणपूजांकुर्याद्विधानतः स्थापयेच्चतुरःकुंभा

शां·म· व चतुर्दिक्षु यथाक्रमं पुण्यतीर्थजलोपेतान् धान्यस्योपरि विन्यसेत् तन्मध्ये स्थापयेत्कुंभं शातच्छिद्रसमन्वितं पंचमृत्सं
५३ चरत्नानि पंचत्वक् पंचपल्लवान् पंचधान्यं सुवर्णं च तत्तन्मंत्रैर्विनिक्षिपेत् सर्वौषधानि निक्षिप्य श्वेतवस्त्रेणावेष्टयेत् ॥
सुरभीणि च पुष्पाणि श्वेतानि परिवेष्टयेत् सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः आयांतु यजमानस्य दुरितक्षयकार
काः आवाह्य वारुणैर्मंत्रैरनेन विधिना ततः इमं मे वरुणेत्यनया तत्त्वायामि ऋचा तथा त्वन्नो अग्न इत्यनया स त्वन्न इति मं
त्रतः आग्नेयकुंभमारभ्य पूजां कुर्याद्यथाक्रमं आनो भद्रारव्यसूक्तं च भद्रा अग्नेश्च सूक्ततः जप्त्वा तु पौरुषं सूक्तं कद्रुद्र तु क्रमा
ज्जपेत् ईश्वरस्याभिषेकं च ग्रहपूजां समाचरेत् पूजाकर्म सुनिर्वर्त्य होमं कुर्याद्विधानतः गृहादीशानदिग्भागे कुंडं कुर्या
द्विधानतः विस्तारायामखातं च अरत्निद्वयसंमितं समिदाज्यचरूंश्चैव तिलमाषाश्च सर्षपैः अश्वत्थप्लक्षपालाशखा
दिरैः स्वादिरैः शुभैः अष्टोत्तरसहस्रं वा अष्टोत्तरशतं तु वा अष्टाविंशतिमेतैश्च होमं कुर्यात्पृथक् पृथक् त्र्यंबकेनं
र्वमंत्रेण तिलाश्चाहुतिभिः पृथक् कृत्वा होमाश्च कर्तव्या अस्मदुक्तविधानतः एवं क्रमेण कर्तव्यं होमशेषं समापयेत् स
र्वालंकारयुक्तानां त्रयाणामभिषेचनं त्रयाणां मातापित्रोः शिशुनो चतुर्भिः कलशैर्दृढैः हत्कुंभसमन्वितं धौतांबराणि द
त्वाथ कुर्यादाज्यावलोकनं पूर्णाहुतिं च जुहुयाद्यजमानसमाहितः तत्सर्वं परया भक्त्या ईश्वराय निवेदयेत् सर्वालंकारसंयु

कापवत्सांगांपयस्विनीं प्रतिमांवस्त्रयुग्मंचआचार्यायनिवेदयेत् अन्येषांचैवसर्वेषांकुर्याद्ब्राह्मणवाचनं तस्मादेतेनविधि
नावित्तशाठ्यविवर्जितः एवंयः कुरुतेशांतिंसर्वपापैःप्रमुच्यते सर्वान्कामानवाप्नोति स्थिरजीवीसुखीभवेत् इतिकृष्णच
तुर्दशीशांतिः अथसिनीवालीकुहूशांतिः गार्ग्यः सिनीवाल्यांप्रसूतास्याद्यस्यभार्यापशुस्तथा गजाश्वमहिषी चैवशक्र
स्यापिश्रियंहरेत् येसंतिसकलापश्चात्तत्प्रसादोपजीविनःवर्जयेत्तानशेषांस्तुपशुपक्षिमृगादिकान् कुहूप्रसूतिरत्यर्थंसर्व
दोषकरीस्मृता यस्यप्रसूतिरेतेषां तस्यायुर्धननाशनं सर्वगंडसमस्तत्रदोषस्तुप्रबलोभवेत् शांतिंविनाविशेषेणपरि
त्यागोविधीयते परित्यागात्तत्रशांतिंकुर्याद्बुद्धिमान्विचक्षणः परित्यागादितिल्यप्लोपेपंचमीपरित्यागंकृत्वेत्यर्थः तत्का
लंतत्क्षणार्द्धेनपुनरेवानुपालनं नत्यजेत्खंडितोमोहादर्थादज्ञानतोपिवा तद्योगान्नाशयेत्किंचित्स्वयंवानाशमश्नुते क
स्तोकशांतिःकर्तव्यासर्वदोषापनुत्तये रुद्रः शक्रश्चपितरःपूज्यास्तुदेवताःक्रमात् कर्षमात्रसुवर्णेनतदर्धेनवापुनः
अथवाशक्तितःकुर्याद्वित्तशाठ्यविवर्जितः प्रतिमाकारयेच्छंभोश्चतुर्भुजसमन्विता त्रिशूलखड्गवरदाभयहस्तायथा
क्रमं श्वेतवर्णाश्वेतपुष्पाश्वेतांबरवृषस्थिता त्र्यंबकेनमंत्रेणपूजांकुर्याद्यथाविधि इंद्रश्चतुर्भुजोवज्रांकुशचापयः
ससायकः रक्तवर्णोराजारूढोयतइंद्रेतिमंत्रतः पितरःकृष्णवर्णाश्चचतुर्हस्ताविमानगाः गदाक्षसूत्रकमंडलभया

स्यैवधारिणः येभूताइतिमंत्रेणपूजांकुर्यादनंतरं आग्नेयींदिशमारभ्यकुंभान्कोणेषुविन्यसेत् येसत्यासोहविरदंतइ
त्यादिमंत्रऋग्वेदेप्रसिद्धः तन्मध्येस्थापयेत्कुंभंशतछिद्रसमन्वितं निक्षिपेत्सर्वगंधादीन्तत्तन्मंत्रैश्चनिक्षिपेत् कल्यो
क्तशांतिःकर्तव्याकुर्याच्छीघ्रंस्वशक्तितः गोदानंवस्त्रदानंचसुवर्णंचोर्वरांशुभां दशदानिचोक्तानिक्षीरमाज्यंगुडंतथा
आज्यावेक्षणपात्राणितत्तन्मंत्रैश्चकारयेत् समिदाज्यंचहोमश्चतिलहोमश्चसर्षपैः अश्वत्थप्लक्षपालाशसमिद्भिः खा।
दिरैःशुभैः अष्टोत्तरशतंमुख्यंप्रत्येकंजुहुयाद्द्विजः त्र्यंबकेनमंत्रेणतिलान्आहुतिभिःपुनः चतुर्भिःकलशैर्युक्तंवृ
हत्कुंभसमन्वितं शांतिवत्सकलंकार्यंअभिषेकंचकारयेत् शांतिवपूर्वोक्तशांतिवत् पितृमातृशिशूनांचअभिषिंचेच्च
वारुणैः शंकरस्याभिषेकंचकुर्याद्ब्राह्मणभोजनं अन्येषांचैवसर्वेषांब्राह्मणानांचतर्पणं यथाशक्त्यानुसारेणद्विजवाचन
पूर्वकं अथप्रयोगः तत्रचतुर्दश्याःषडंशेषुद्वितीयतृतीयषष्ठांशेषुजन्मचेत् गोप्रसवोपिकार्यः कर्तामासपक्षाद्युल्लि
ख्यास्यशिशोश्चतुर्दश्याद्यभागादिषुसिनीवाल्याकुह्वांचोत्पत्त्यासूचितस्यानिष्टस्यनिरासार्थंशांतिंकरिष्यइतिसंकल्प्या
गणेशपूजास्वस्तिवाचनमातृपूजावृद्धिश्राद्धाचार्यादिवरणानिकुर्यात् ततः आचार्यःसर्षपविकिरणादिकृत्वापीठादौ
वरदाभयहस्तंवृषभस्थांहैमीरुद्रप्रतिमांत्र्यंबकमंत्रेणसंपूजयेत् सिनीवालीकुह्वोस्तुरुद्रेंद्रपितरः तत्ररुद्रईशानोर्ध्वे

करकमात्रिशूलखड्गवरदाभयहस्तो वृषस्थस्त्र्यंबकमंत्रेणाद्द्रोवज्रांकुशधनुःशरकरस्तो गजस्थापतद्रुद्रान्मंत्रेण
कृष्णवर्णा गदाक्षसूत्रकमंडलभयकरा विमानस्थापे सत्यास इतिमंत्रे स्थापयेत् पूज्यादिति विशेषः ततः तस्योच्यामीशान्या
मुदीच्यावाग्नेयादिषु चतुरः कुंभान्मध्ये च शतछिद्रं संस्थाप्य तेषु पंचमृदः पंचरत्नपंचत्वक् पंचपल्लव धान्यानि सुवर्णं सर्वौ
षधीश्च क्षिप्त्वा श्वेतवस्त्रपुष्पमालाभिरावेष्ट्य सर्वे समुद्रा इत्यभिमृश्य इमं मे वरुण तत्त्वायामि त्वन्नो अग्ने स त्वन्न इतिमंत्रेण
वरुणमावाह्य संपूज्य क्रमेणा नो भद्रा अपेमहस्रशीर्षा कद्रुद्रायेति सूक्तानि जपित्वा यथाशक्ति रुद्राध्यायादिनाभिषिं
च्य ग्रहाणावाह्य संपूज्य ग्रहेशान्यामग्निं संस्थाप्यान्वादध्यात् तत्र चक्षुषी आज्येनेत्यंते चतुर्दशीशातो रुद्रमभ्यर्च्य प्लक्षपा
लाशखदिरसमिद्दिराज्यचरुतिलमाषसर्षपैः प्रत्येकममुकसंख्यया समस्तव्याहृतिभिस्तिलैश्चामुकसंख्य॰
पायक्ष्य इत्यादि शिनीवाल्याकुह्वौ च रुद्र इंद्र पितरश्च प्रधानदेवताः त्र्यंबकमंत्रेण च शान्तितस्तिलहोमोऽधिकः इति
विशेषः ततआज्यभागांते अन्वाधानक्रमेण होमः सिनीवालीकुह्वोः स्नुगोवस्त्रसुवर्णभूक्षीराज्यगुडान्दत्त्वा गोभूतिल
हिरण्याज्यवस्त्रधान्यगुडरूप्यलवणदानानि च दशकृत्वा होमः कार्य इति विशेषः ततो बलिदानांते कलशोदकैः शत
च्छिद्रेणाद्देवस्य त्वेति मंत्रैरभिषिक्तः पत्नीशिशुसहितो यजमानः आज्यमवेक्ष्य पूर्णाहुतिं हुत्वा गुरवे धेनुं वासो युग्मं क्रत्विग्भ्य

श्च दक्षिणांच दत्वा स्वस्तिवाच्य कर्मेश्वरार्पणं कुर्यादिति ॥ चतुर्दशी सिनीवाली कुहूशांतिप्रयोगः अथ दर्शजननशांतिः नार
दः अथातो दरिद्रता तद्दोषपरिहाराय शांतिं वक्ष्यामि नारदः पुण्याहवाचयित्वादौ क्रतुसंकल्पपूर्वकं कुंडं वा मंडलं कुर्या
त् देशे स्थापयेद्घटं मंडले स्थंडिले तत्कुंभे निक्षिपेद्द्रव्यं दधिक्षीरघृतादिकं न्यग्रोधोदुंबराश्वत्थाः सचूताः प्लक्षकास्तथा ॥
एतेषां वृक्षमूलानां त्वचा दोन्यच्छवांस्तथा पंचरत्नानि निक्षिप्य वस्त्रयुग्मेन वेष्टयेत् सर्वे समुद्राः सरितस्तीर्थानि जलदा
नदाः आयांतु यजमानस्य दुरितक्षयकारकाः आपो हि ष्ठा ऋचेनाथ कयान श्चित्र इत्यृचा यत्किंचेदमृता चैव समुद्रज्येष्ठ इ
त्यृचा अभिमंत्र्योदकं पश्चादग्नेः पूर्वप्रदेशके हारिद्रं रक्तकं चैव कृष्णं श्वेतं च जीरकं एतेषां तंदुलैश्चैव सर्वतोभद्रमुद्धरेत
दर्शस्य देवता पश्चात्सोमसूर्यस्वरूपकं प्रतिमा स्वर्णजा नित्यं राजती ताम्रजा तथा सर्वतोभद्रमध्ये तु स्थापयेद्दर्शदेवता
मह्वर्णो वस्त्रयुग्मं तद्दुर्गागंधपुष्पकं आप्यायस्वेति मंत्रेण सविता पश्चात्तथैव च उपचारैः समांग्य ततो होमं समा
चरेत् कृत्वा वन्हिं प्रतिष्ठाप्य क्रतुसंकल्पमीदृशं आयुरारोग्यसिध्यर्थं सर्वारिष्टप्रशांतये पुत्रस्य दोषजननदोषनि
र्हरणाय चामातापित्रोः कुमारस्य सर्वारिष्टप्रशांतये तेषामायुः श्रियं चैव शांतिहोमं करोम्यहं ॥ समिधश्च चरुद्रव्यं
क्रमेणजुहुयात्कृती हुनेत्सवित्रिमंत्रेण सोमो धेनुं च मंत्रतः एतैर्मंत्रैश्च प्रत्येकं हुनेदष्टोत्तरं शतं दर्शस्य देवता होम

अष्टाविंशतिसंख्यया सवितृमंत्रत्वोक्तत्वेनेति अत्रैतैरितिवहुवचनं दर्शदेवतामंत्राभिप्रायेण होममेवं तुक्तत्वात्कु
र्याद्धाराभिषेचनं श्रीसूक्तमापुष्पसूक्तं समुद्रज्येष्ठेत्यृचा एतैर्मंत्रैरभिषेकं मातापित्रोः शिशोस्तथा ततः स्विष्टकृतं द
द्याद्धोमशेषं समाचरेत् हिरण्यं रजतं चैव वत्सां धेनुं सदक्षिणां अन्येभ्योपि यथाशक्त्या दातव्या दक्षिणा तथा ब्राह्मण
न्भोजयेदत्र कारयेत्स्वस्तिवाचनं इति दर्शजननशांतिः अत्र सिनीवालीकुह्वोर्दर्शभेदोक्तयोः शांत्योर्व्यवस्थोक्ता छंदोगप
रिशिष्टभाष्ये चतुर्दश्यष्टांशस्तोमायाश्चाष्टांश इति नवप्रहराश्चंद्रक्षयकालः चतुर्दश्यष्टमे यामे क्षीणो भवति चंद्रमा अमावा
स्याष्टमे भागे पुनः किल भवेदणुरिति वाक्यात् अत्रेंदुराद्ये प्रहरे वतिष्ठते चतुर्थभागोनकलावशिष्टः तदंतमेव क्षयमेति हृत्स्न
मिवं ज्योतिश्चक्रविदो वदंतीति वाक्यात् एवं चतुर्दश्यपामस्या यामे योरणुश्चंद्रः शास्त्रचक्षुषो गोचरो भवती स कालो दृष्टचंद्र
त्वात्सिनीवाली अमांत्ययोपांत्ययामयोः शास्त्रचक्षुषोरगोचर इति क्षीणश्चंद्रः सकालः कुहूर्मध्यमाः पंचयामा दर्श इति व्य
वस्थापाशांतिव्यवस्थेति परे तु चतुर्दशीमात्रयुक्तेहोरात्रे वर्तिन्यमा सिनीवाली प्रतिपन्मात्रयुते तु कुहूः गात्रयस्पर्शिम
ध्यमाहोरात्रावर्तिन्यमा दर्शः तस्मिंश्चतुर्दशीप्रतिपदोरभावेनोभयलक्षणानाक्रांतत्वात् तथाच भवतीचाभादर्शः केवलचतुर्द
शीकेवलप्रतिपद्युक्तत्वाभावात् अतस्त्रिस्पर्शिन्याममवस्यायां सिनीवालीकुहूशांतिप्राप्त्यभावात् दर्शशांतिप्राप्तिरिति युक्तं

शां·म माहुः अथदर्शजननशांतिप्रयोगः कर्तास्यकुमारस्यकुमार्यावादर्शजन्मसूचितानिष्टनिवृत्त्यर्थंशांतिंकरिष्य इतिसंकल्प्य गणेशा
५६ पूजास्वस्तिवाचनाचार्यादिवरणानिकुर्यात् अथाचार्यः सर्षपविकिरणप्रोक्षणादिकृत्वा शुद्धभूमौजलपूर्णंपंचगव्यपल्लव
त्वकरत्नयुक्तंवासोयुग्मवेष्टितंकुंभंधान्योपरिसंस्थाप्यसर्वेसमुद्राइतितीर्थान्यावाह्यापोहिष्ठेतितृचेनकेपानश्चित्रइति
ऋचायत्किंचेदभितृचासमुद्रज्येष्ठाइतितृचेनमंभिमंत्र्यतन्नैर्ऋत्यदेशेपंचरंगरंजितैस्तंदुलैः सर्वतोभद्रंकृत्वातत्रस्वर्ण
प्रतिमायांयेसत्यासइतिपितॄन्तद्दक्षिणेरूप्यप्रतिमायामाप्यायस्वेतिसोमंतदुत्तरेताम्रप्रतिमायांसवितापश्चादिति सूर्यंचावा
ह्यसंपूज्यआयुरारोग्यसिध्यर्थंसर्वारिष्टप्रशांतये पुत्रस्यदर्शजननदोषनिर्हरणायचमातापित्रोः कुमारस्यसर्वारिष्टप्र
शांतये तेषामायुःश्रियंचैवशांतिहोमकरोम्यहं इतिउक्त्वा तत्पश्चिमेकुंडेस्थंडिलेवाग्निंप्रतिष्ठाप्यतदीशान्यांग्रहा
न् संपूज्यान्वाधानेआघारावाज्येनेत्युक्त्वा पितॄन् समिच्चरुभ्यामष्टाविंशतिवारंसोमंसूर्यंचाष्टोत्तरशतवारंशेषेणेत्याज्यभा
गांतेन्वाधानक्रमेणपूजामंत्रैर्हुत्वामातापित्रोःशुनर्हिरण्यवर्णामितिचतुर्दशर्चेन आयुष्यंवर्चस्यमितिदशर्चेन स
मुद्रज्येष्ठाइतितृचाचजलधारयाभिषिच्यस्विष्टकृदादिसमापयेत् यजमानोबलिदानपूर्णाहुत्यंतेहेमरूप्यकृष्णाधेनु
राचार्यायऋत्विग्भ्यश्चयथाशक्तिदक्षिणांदत्वाविप्रान्संपूज्यस्वस्तिवाचनंकुर्यात् इतिदर्शशांतिः अथज्येष्ठाशांतिःवृद्ध

गार्ग्यः घटिकैकाचमैत्रांते ज्येष्ठादौ घटिकाद्वयं तयोःसंधिरितिज्ञेयंत्रिंशुगंडंसमीरितं प्रथमेचद्वितीयेचज्येष्ठर्क्षेदंततृतीयके पा
दत्रयेजातनरोज्येष्ठे अत्रप्रजायते ज्येष्ठांत्यपादजातस्यपितुस्तस्यविनाशकः जायतेनात्रसंदेहोदशाहाभ्यंतरेपिवा ज्येष्ठर्क्षे
कन्यकाजाताहंति शीघ्रंधवाग्रजं तत्छांतिंतस्यवक्ष्यामिगंडदोषप्रशांतये ॥ सुदिनेशुभनक्षत्रेचंद्रताराबलान्विते सू
तकांतेतथाकुर्याज्ज्येष्ठाशांतिंविधानतः वज्रांकुशधरंदेवमैरावतगजान्वितं कुर्याच्छचीपतिंरम्यंदेवेंद्रंसुरनायकं ॥
कर्षमात्रसवर्णेनतदर्धेनाथपादतः तद्विधानंप्रकुर्वंतिवित्तशाठ्यंनकारयेत् शालितंदुलसंपूर्णकुंभस्योपरिपूजयेत्
देवद्रायेदोमंत्रस्ततइतिमंत्रेणवाग्यतः गंधपुष्पैर्धूपदीपैर्नानाभक्ष्यनिवेदनैः पूजयेत्तविधिनाविप्रलोकपालगणान्वितं
रक्तवस्त्रद्वयोपेतंपूजयेत् सुरनायकं तत्रसंस्थापयेत्कुंभांश्चतुर्दिक्षुविशांपतेः तन्मध्येस्थापयेत्कुंभंशतछिद्रसमन्वि पुण्यो
दकसमापूर्णान्वस्त्रयुग्मेनवेष्टितान् कुंभेषुविन्यसेद्रेसान्पंचगव्यसमंत्रकं पंचामृतंपंचरत्नमृत्तिकाः पंचसंख्यया ॥
पंचवृक्षकषायांश्चपंचपल्लवकांस्तथा सुवर्णकुशदूर्वांश्चशतौषधिविनिक्षिपेत् पूजयेद्वारुणैर्मंत्रैः कुंभान्धीमात्र्यप
त्वतः त्वन्नोअग्नेजपेदादौसत्वन्नोपिद्वितीयकं समुद्रज्येष्ठाइति इमंमेगंगेचतुर्थकं पूजयेद्वस्त्रयुग्मायैश्चतुरःकलशा
नपि जपंकुर्युःमयस्तेनमंत्रैरभिर्द्विजोत्तमा आनोभद्राजपंचादौभद्रंअग्नेद्वितीयकं तृतीयंपौरुषंसूक्तंकद्रुद्रायचतु

र्थकं आचार्यो मूलमंत्रेण जपं कुर्याद्विशेषतः ॥ इंद्रसूक्तं रुद्रजाप्यं जपन्मृत्युंजयं तथा इत्थं संपूज्य देवेशं वरुणं कुंभसंस्थितं
सुसंकल्प विधानेन होमकर्म ततश्चरेत् समिद्भिर्वल्कवृक्षस्य शतमष्टोत्तरं तथा सर्पिषा चरुणा चैव मूलमंत्रेण वाग्यतः ॥
हुनेज्जाप्यं च तेनैव यत इंद्र भयेति च तिलान्व्याहृतिभिर्हुत्वा शतमष्टोत्तरं तथा भार्याशिशुसमोपेतं यजमानं विशेषतः अभि
षेकं प्रकुर्वीत मंत्रैर्वारुणसंज्ञिकैः समुद्रज्येष्ठादिभिर्मंत्रैरिमं मे वरुणस्तथा द्यौःशांतरिसादिभिर्मंत्रैरभिषेकं समाचरेत्
अभिषेके निवृत्ते तु यजमानः समाहितः सुल्कांबराणि धृत्वाथ कृत्वा आज्यावलोकनं रूपेणा वेति मंत्रेण चित्रं तच्च
क्षुरेव च देवतापुरतः स्थित्वा धूपदीपनिवेदनं दद्याच्चाचमनं सम्यक् तांबूलार्घ्यं तथैव च नमस्ते सुरनाथाय नमस्तुभ्यं शची
पते गृहाणार्घ्यं मया दत्तं गंडदोषप्रशांतये कार्पतत्पूजकादीनां कारितं यत्फलं शुभं जन्मानुवत्फलं सर्वं देवेशाय समर्पयेत्
आचार्याय च गां दद्यात्सुशीलां च पयस्विनीं रक्तवर्णां वस्त्रयुतां सर्वालंकारभूषितां वस्त्रयुग्माभिधानां च यथावित्तानुसा
तः यक्षगंधर्वसिद्धैश्च पूजितोसि शचीपते दानेनानेन देवेश गंडदोषं विनाशय अष्टोत्तरशतं संख्या कुर्याद्ब्राह्मणभोज
न तेभ्योपि दक्षिणां दत्वा प्रत्यक्षमापयेत् इमां कृत्वा शांतिं ज्येष्ठाय यथाविध्युक्तमार्गतः गंडदोषं विनिर्जित्य आयुष्मान् जा
यते नरः इत्युक्तं च हद्गार्ग्येण शौनकाय विशेषतः ज्येष्ठानक्षत्रसंभूतगंडदोषप्रशांतये अज्ञानाद्वाथ ज्ञानाद्वा वैकल्या

ह्याधनस्यैव यन्न्यूनमतिरिक्तं वा तत्सर्वं क्षंतुमर्हसि अथ प्रयोगः गोमुखप्रसवं कृत्वास्य शिशोः ज्येष्ठाजननसूचितस
कलारिष्टनिरसनद्वारा श्रीपरमेश्वरप्रीत्यर्थं शांतिं करिष्य इति संकल्प्य गणेशपूजनपुण्याहवाचननांदीश्राद्धाचार्य
ऋत्विक्चतुष्टयवरणानि कुर्यात् ततः आचार्यः सर्षपविकिरणभूमिप्रोक्षणं कृत्वा महीद्यौरित्यादिविधिना शालितं
दुलपूर्णं कुंभं संस्थाप्य पूर्णपात्रोपरि हैमीमिंद्रप्रतिमां इंद्रायेंद्रो मरुत्वत इति मंत्रेण रक्तवस्त्रद्वयेन गंधादिभिश्चाभ्यर्च्य तत्
पूजयेत् . तत इंद्रभिन्नान्लोकपालान्समंतादावाह्य पूजयेत् ततः पूर्वादिदिक्षु चतुरः कुंभान्मध्ये शतछिद्रपुण्पोदकवम
स्त्रमाल्यादियुतं संस्थाप्य दिक्कुंभेषु पंचगव्यपंचामृतपंचरत्नपंचमृत्तिकापंचक्षकषायपंचपल्लवसुवर्णकुशदूर्वाः शतौष
धीश्च दत्वा पूर्वकलशे त्वन्नो अग्न इति सत्वन्नो अग्न इति दक्षिणे समुद्रज्येष्ठा इति पश्चिमे इमंमेगंगे इति उत्तरे वरुणामावास्य
वस्त्रपुष्पार्घैः पूजयेत् ततश्चत्वार ऋत्विजः आनोभद्राभद्राअग्नेपुरुषसूक्तः कद्रुद्राय सूक्तानि जपेयुः आचार्योष्टशत
दिसंख्यया इंद्रायेंद्रो मरुत्वत इति मूलमंत्रेण इंद्रं विश्वाअवीवृधन्नित्यष्टं वेंद्रसूक्तं रुद्रं मृत्युंजपं यथाशक्त्या जपेत् त
तोग्निग्रहाश्च संस्थाप्यान्वादध्यात् तत्राग्नीषोमौ चक्षुषी आज्येनेत्यंते अत्र प्रधानं इंद्रं पलाशसमिदाज्यचरुद्रव्यैरष्टश
तसं ख्यया अष्टसहस्रसंख्यया वाइंद्रेनेन प्रजापतिं तिलद्रव्येणाष्टशतसंख्यया व्याहृतिभिः शेषेण स्विष्टकृतमित्यादि

वस्यंतेपूर्णाहुतिंपूर्णपात्रदानप्रणीताविमोकंचकृत्वासभार्यंसशिशुंयजमानंवारुणैः सूक्तैः समुद्रज्येष्ठाइमंमेवरुणेत्यो
शांतेस्यादिभिरभिषिंचेत् ततोरूपमिति आज्यमवलोक्यतत्पात्रंसदक्षिणंब्राह्मणायदत्वाइंद्रंसंपूज्यनमस्तेसुरनाथायन
मस्तुभ्यंशचीपते गृहाणार्घ्यंमयादत्तंगंडदोषप्रशांतयेइत्यर्घ्यंदत्वाआचार्यायऋत्विग्भ्यः श्रेयोगृहीत्वाइंद्रायसमर्प्य
चार्घ्यपयस्विनींगौरक्तवस्त्रद्वयंचदत्वोत्तरपूजांतेइंद्रंविसृज्यप्रतिमां यक्षगंधर्वसिद्धैश्चपूजितोसिशचीपते दानेनाने
नदेवेशगंडदोषप्रशांतये अज्ञानाद्वाथज्ञानाद्वावैकल्याद्वाधनस्यच यन्न्यूनमतिरिक्तंवातत्सर्वंक्षंतुमर्हसीतिमंत्रेण
दत्वा ऋत्विग्भ्योपियथाशक्तिदक्षिणांदत्वाग्निंविसृज्याष्टशतंब्राह्मणान्भोजयेत् अथमूलशांतिः शौनकः अथातःसंप्र
वक्ष्यामिमूलजातहितावहं। मातापित्रोर्धनस्यापिकुलस्यापिहितावह त्यागोवामूलजातस्यादर्शनाद्वाप्रदर्शनं अ
भुक्तमूलजातानांपरित्यागोविधीयते अदर्शनाद्वापिपितःसतुतिष्ठेत्समाष्टकं एवंदुहितरिप्रोक्तंमूलजातफलंबुधैः
कन्यायांतुविशेषः नवालाहंतिमूलर्क्षेमातरंपितरंतथा मूलजाश्वशुरंहंतिव्यालजातुतदंगना महेंद्रजाग्रजंहंतिदे
वरंचवह्निदैवजा व्यालआश्लेषा महेंद्रज्येष्ठा वह्निदैवंविशाखा शांतिर्वापुष्कलाचेत्स्यात्तर्हिदोषोनकश्चनेति मुख्यका
लंप्रवक्ष्यामिशांतिहोमंजपंततः जातस्यद्वादशाहेवाजन्मर्क्षेवाशुभेदिने समाष्टकेद्वादशाब्देकुर्याच्छांतिकमादरात्॥

पदैव शांतिकं कुर्यात् कर्मतत्र प्रवक्ष्महे संस्कृते पुराणदेशे तु मंडपं कारयेद्बुधः पुराणोक्तैर्मंत्रैर्नैस्तोयैः प्रोक्षितायां क्षितौ ततः
तत्रोदकुंभं सुश्लक्ष्णं रक्तंव्रणविवर्जितं सुवर्तुलं च निर्णिक्तं पूरयेन्निर्मलांभसा वस्त्रावगुंठितं कुर्यात्पूरयेत्तीर्थवारिणा आम्र
र्वङ्हिमसमायुक्तं चूतपल्लवसंयुतं स्वस्तिकोपरि विन्यस्य सक्षीरद्रुमपल्लवैः द्रोणव्रीहौश्च निक्षिप्य ईशाने च निधापयेत् पं
चरत्नानि निक्षिप्य सर्वौषधिसमन्वितं अर्चितं गंधपुष्पाद्यैः श्रीरुद्रं च पृथक् जपेत् षडंगसहितं सम्यक् जपेद्वै रुद्रसंख्य
या वह्वृचो रुद्रसूक्तैर्वा छंदोगा रुद्रसामभिः सूक्तानि सामानि च त्रीण्येव कपिंजलन्यायात् एकादशार्थत्रिधैकसंख्यायाश
क्तितो जपेत् तत्राप्रतिरथंसूक्तं शतरुद्रानुवाककं रुद्रानुवाकं तथा पुण्यं राक्षोघ्नं च सहस्रशः जपेत् त्रैपदकं जपेत्सम्यक् त्र्यष्टो
त्तरं सहस्रकं एकवारं तथा वापि पावमानीः सहस्रशः जपेत् जपस्य पंचकुंभाः स्युर्द्वैपवातदलाभतः श्रीरुद्रस्यैककुंभश्च सर्वे
सूक्तानि तत्र तु तथान्यं च शुभं कुंभं पूर्वोक्तैर्लक्षणैर्युतं चतुःप्रश्रवणं कुर्यात्संच वक्ष्यतु तद्भवेत् अत्रायं साम्प्रदायिकोर्थः आ
घपक्षेषु कुंभाः पूर्वो रुद्रस्य तस्मिन् शतरुद्रीय रुद्रसूक्तानि सामानि जप्यानि अभिषेकार्थे पंचकुंभाः तत्र पूर्वादिकं भवंतु
इत्येतत्राप्रतिरथं आशुः शिशान इत्यादिना क्रमात्सूक्तचतुष्टयविधिः मध्ये च त्र्यंबकं मंत्रं पावमानीजपे द्विविधिः एवं पंचकुंभाः शक्तौ चतुःप्र
श्रवणा एव द्वयमिति द्वितीयं तु रुद्रकुंभमादाय अत एव श्रीरुद्रस्येति श्लोकार्थेन रुद्रकुंभ एव पूर्वोक्तो द्वितीयसंख्यापूरणाय नूय

शां·म तोचतुः प्रश्रवणएवतुपंचकुंभस्थानेविधीयते एवंपंचवक्त्रंतुतद्ध्वेदितिपंचवक्त्रतोक्तिरपिपंचकुंभस्थानीयत्वासंगच्छते वस्त्रा
५९ वगुंठितंकुर्यात्सूत्रेणैवतीर्थवारिणा पंचरत्नसमायुक्तमाम्रपल्लवसंयुतं गजाश्वरथ्यावल्मीकात्संगमात्ह्रदगोकुलात् राजद्वा
रप्रदेशाच्चमृदमानीयनिःक्षिपेत् कुंभस्यनैरृतेदेशेहोमदेशंप्रकल्पयेत् गोमयालेपितेदेशेकुर्यात्स्थंडिलमुत्तमं कृत्वाग्नि
मुखपर्यंतमुल्लेखादिस्वशक्तितः पूर्णपात्रनिधानांतंकृत्वापूजांसमाचरेत् नक्षत्रदेवतारूपंसुवर्णेनप्रयत्नतः निष्कमात्रे
णतदर्धेनपादेनाथस्वशक्तितः प्रतिमालक्षणोपेतांकारयित्वाविचक्षणः पद्मामूलंसुवर्णस्यस्थापयित्वाप्रपूजयेत् मूलंमूला
कारंमूल्यमितिक्वचित्पाठः तदाप्रतिमामूल्यमित्यर्थः सुवर्णस्यचवर्णस्यस्थापयित्वाप्रपूजयेत् सुवर्णंसर्वदेवत्यंसर्व
देवत्यंसर्वदेवात्मकोनलः सर्वदेवाद्यकोविप्रः सर्वदेवात्मकोहरिः संस्मरेन्निरृतिंश्यामंसुमुखंनरवाहनं रक्षोधिपंखड्ग
हस्तंदिव्याभरणभूषितं प्रतिमापूजनार्थायवस्त्रयुग्मंप्रकल्पयेत् पंकजंकारयेद्धीमानरत्नाभैर्व्रीहितंडुलैः चतुर्विंशद्दलो
पेतंमुक्तैर्वाकर्णिकान्वितं तस्योपरिन्यसेत्पात्रंसौवर्णंरूप्यमृण्मयं शुद्धवस्त्रेणसंस्थाप्यतत्रमूलानिनिक्षिपेत् मूला
नियातमूलानितानिच स्वयमुत्पादयेत्प्राज्ञोमूलानांचशंपिता मंगल्याश्चपवित्राश्च ओषध्यः कश्यपाम्यहं लक्ष्म
णाशतमूलावशिरीषोवेतसस्तथा सहकाश्वेतमूलाचविष्णुक्रांताथशंखिनी सर्पाक्षीमीननेत्राचपुत्रपाचीकृतांजली

पाला शो विषकश्चैव रोचना चंदनद्वयं कुष्ठामांसीमुरीशीरं वालकं च तथामला गोजिव्हा तुलशी दूर्वा शतपुष्पी सलांगली
ब्रह्मदंडी द्रोणपुष्पी प्रियंगुश्वेतसर्षपा पिप्पलीकाकजंघा च त्रापमाणाहुहूतथा ज्योतिष्मतीच गंधारी निर्गंधा पूर्णकोशि
का भृगाक्षमासुभद्रा च गुडूची सेंद्रवारुणी अलंबुका रुदंती च वकदली केतकी तथा गोक्षुर शतपर्वा च अरिष्टा कापराजि
[illegible] छिन्नरुहा शतपर्वा निकुंभा च सुवर्चला अश्वगंधा हस्तिकर्णी हरिद्रा हिंतपत्तथा उदुंबो मधुकार [illegible] अश्वत्थो वकुल
सोतथा नष्टक्षीरा स्वयामागो मंदारश्चातिमुक्तकः मालती स्वर्णपुष्पा च श्रीपर्णी श्रीफलं तथा दर्भमूलं [illegible] वीरं मंदयंतीवि
कंकेतः पाटला सुरदारुश्च अर्धसूदनिकस्तथा फलमन्मथमूलस्य पलाशस्य च पल्लवाः रास्नान [illegible] समूलं सुरदारु॥
र्विदारिका श्वेतवीर्या श्वेतपाका नीलोत्पलं तथैव च नागकेशर मंदारीकुमारी चैव निक्षिपेत् तीर्थांबुपंचगव्यं च गाव्यं च सर्वे
षध्यश्च कांचनं पथास्तंभ तोवा पियास्वमूलशतं शुभं सीरत्वचा समेतं च शतछिद्रा घटेन्यसेत् शतमूला शतावरी वेतसो
वंजुलः सहकार सहदेवी च श्वेतमूला पुनर्नवा मीननेत्रा मत्स्याक्षी पुत्रपारी पुत्रजीवाः कृतांजलिनाम्हा याजोडा इति
प्रसिद्धा विल्वको विल्वः चंदनद्वये श्वेतपीतं च आमला भूम्यामलकी गोजिव्हा गजजीभीति प्रसिद्धा लांगली कलिहारी
तिप्रसिद्धा ब्रह्मदंडी अधःपुष्पा द्रोणपुष्पी कांबुकः काकजंघा काकांगी ज्योतिष्मती मकंगुला गांधारी देवगांधारी पूर्णा॥

कोशिकाकोशातकी मगक्षमाशिग्रुः सुभद्रासारिका अलंबुकातुंवीशतपर्वावचा अरिष्टिकानागवल्लाछिन्नरुहापिंडगुडु
चो शतपत्राकमलिनी निकुंभादंतिभिदः सुवर्चलासूर्यभक्ता हस्तिकर्णएरंड उष्ट्रावः पीलुः मधुकारोमधकः सर्जरावो
जकः अतिमुक्तकोम, धवी मालतीजाती स्वर्णपुष्पाकुशलीमंदंतीपुष्पिकाः वैककः तम्रुवावृक्षः श्रीफलविल्वः आ
र्यसूदनिकापालकी मन्मथवृक्षः आम्रः सुरदारुदेवदारुः विदारिकामूष्माडी श्वेतवीर्यागिरिकर्णी श्वेतपाकागुजा
त्रेषाणिप्रसिद्धानि विष्णुक्रांतासहदेवीतुलशीतुशतावरी मूलानिमानिगृह्णीयाछ्तालामेविपोषतः स्थापयेत्कर्णि
कामध्येवस्त्रगंधाद्यलंकृतंकूर्चहेमजलोपेतंकुंभमोषधीसंयुतं कुंभोपरिन्यसेद्विद्वान्मूलनक्षत्रदैवतं अधिप्रत्यधिदैवो
दक्षिणोत्तरदेशयोः अधिदेवंयजेदादौज्येष्ठानक्षत्रदैवतं उत्तराषाढऋक्षादि अनुराधांतमर्चयेत् इंद्रादीशानपर्यंतं
पूजयेत्स्वस्वनामतः स्वलिंगोक्तैश्चमंत्रैश्चप्रधानादीन्प्रपूजयेत् पंचामृतेनसंस्नाप्यआवाह्याथसमर्चयेत् उपचारैःषोत
डषभिर्यद्वापंचोपचारकैः रक्तचंदनगंधाद्यैः पुष्पैः कल्पसितादिभिः मेषसंगादिधूपैश्चघृतदीपैस्तथैवच सुरापोलिक
मांसाद्यैर्नैवेद्यैरोदनादिभिः मत्स्यमांससुरादीनिब्राह्मणानांविवर्जयेत् सुरास्थानेप्रदातव्यंक्षीरंलवणमिश्रितं पाय
संलवणोपेतंमांसस्थानेप्रकल्पयेत् उक्तगंधाद्यलाभेतुयथालाभंसमर्चयेत् पुष्पांतेतुसमभ्यर्च्यहोमंकुर्याद्यथोदितं

भद्रासनोपविष्टस्ययजमानस्यऋत्विजः दारपुत्रसमेतस्यकुर्युः सर्वेभिषेचनं अक्षीभ्यामितिसूक्तेन पावमानीभिरेवव
स्त्रापोहिष्ठेतिनवभिर्यतइंद्रद्वयेनच सहस्राक्षऋचेनापिदेवस्यत्वेतिमंत्रकैः शिवसंकल्पमंत्रेणवाक्ष्यमाणोश्वमंत्र
कैः योसौवज्रधरोदेवोमहेंद्रोगजवाहनः मूलजातशिशोर्दोषंमातापित्रोर्व्यपोहतु योसौशक्तिधरोदेवोहुतभुक्
मेषवाहनः सप्तजिह्वः सदेवोग्निर्मूलदोषंव्यपोहतु योसौदंडधरोदेवोधर्मोमहिषवाहनः मूलजातशिशोर्दोषंव्य
पोहतुयमस्तथा योसौखड्गधरोदेवोनिर्ऋतीराक्षसाधिपः प्रशामयतुमूलोत्थंदोषंबालस्यशांतिदः योसौपाशध
रोदेवोवरुणश्चजलेश्वरः नक्रवाहः प्रचेताश्चमूलोत्थंचव्यपोहतु योसौदेवोजगत्प्राणोमारुतोमृगवाहनः प्र
शामयतुमूलोत्थंदोषंगंडांतमूलकं योसौनिधिपतिर्देवोगदाभृन्नरवाहनः मातापित्रोशिशोश्चैवमूलदोषंव्य
पोहतु योसौपशुपतिर्देवोपिनाकीवृषवाहनः आश्लेषामूलगंडांतदोषमाशुव्यपोहतु विघ्नेशः क्षेत्रपोदेवःगा
पिनाकीवृषवाहनः अश्लेषामूलपांडांतदोषमाशुव्यपोहतुः सर्वदोषप्रशमनंसर्वैकुर्वंतुशांतिदः ततंपोरभिषे
कंतुसर्वदोषोपशांतिदः सर्वकामप्रदंदिव्यंमंगलानांचमंगलं वस्त्रांतरितकुंभाभ्यांपश्चात्तुस्त्रपयेद्बुधः ततःशु
क्लांवरधरः भुक्तमाल्यानुलेपनः जजमानोदक्षिणाभिस्तोषयेदृत्विगादिकान् धेनुंपयस्विनींदत्वाआचार्या

दसवत्सकां निर्ऋतिप्रतिमां वस्त्रं कुंभं हेमं च दापयेत् ग्रहार्थवस्त्रप्रतिमां ग्रहहोतृषु दापयेत् श्रीरुद्रजापिने देयः कलशोनड्वान् प्रप
लतः तत्कुंभवस्त्रप्रतिमास्तस्मै दद्यात्प्रयत्नतः इतरेभ्योपि विप्रेभ्यो शक्त्या दद्याच्च दक्षिणां उक्तालाभे तु तेनो दद्यात् आचार्यब्रह्म
ऋत्विजः तत्तन्मूल्यं प्रदातव्यं ज्ञात्वा पावाथ प्रदापयेत् आचार्यो यवपद्वंतं तदर्द्धं ब्रह्मणे भवेत् सदस्याय ब्रह्मणोर्द्धं ऋत्विग्भ्यश्च तद
र्धकं शस्त्रीयादाशिषस्तेभ्यः प्रणम्याथ क्षमापयेत् दद्यादन्नं पायसादि ब्राह्मणान्भोजयेत्ततः अलाभे शक्तिपर्याप्तं दद्याच्छाकं तदभा
वतः सर्व शांतेश्च पठनं ब्राह्मणैराशिषः तथा गृह्य क्षमापयेद्विप्रान्निर्ऋतिः प्रियतामिति विधाने वर्तितेस्मिंस्तु ततः शांतिर्भवेत्ध्रुवं गं
डान्तेष्वेवमेव स्यात्तु ष्यायेष्वेवमेव तु समाष्टके द्वादशाहे कुर्यादै शांतिमादरात् अश्लेषाशांतावप्येवं विधिः मूलश्लोकप्रकारेण कुं
भे निक्षिप्य पूजयेत् कुंभोपरिस्थपात्रे तु आश्लेषाप्रतिमा पूजयेत् मूलोक्तेन विधानेन कुंभयोरभिमंत्रणमित्यादिभिरतिदेशात् अ
श्लेषाप्रतिमासर्पाख्या अथ मूलाश्लेषाशांत्योः प्रयोगः नत्वा कर्ता उक्तकाले मासपक्षाद्युल्लिख्य ममास्य शिशोः कुमार्या वा मूलाद्य
पादादिद्यश्लेषायां वा जन्म नामसूचितपित्राद्यरिष्टशांत्यर्थं शांतिं करिष्ये इत्युक्त्वा गणेशपूजनस्वस्तिवाचनमातृकापूजाभ्युदयीका
नि कृत्वाचार्यब्रह्मसदस्यान् ऋत्विजश्चाष्टौ षट् चतुरो वा वृत्वा यथाविभवमर्चयेत् अथाचार्य आचार्यकर्म करिष्ये इति संकल्पः यद
त्र संस्थितमिति सर्षपान्विकीर्य आपो हिष्ठेत्यादिभिर्भुवं प्रोक्ष्य शन्नोमहि द्यौरिति स्पृष्ट्वा ओषधयः समिति द्रोणपरिमितव्रीह्यादि स्वि

मितिगंधं ॐ षधीरित्योषधीरोषधयः संमितियवान् कांडादितिदूर्वी अश्वत्थेवइतिपंचपल्लवान् रुचनोभिमइति
पंचत्वचः स्योनापृथिवीनिसप्तमृदोयाः फलिनीरितिफलंसहिरत्नानीतिपंचरत्नानिहिरण्यरूपइतिहिरण्यं गायत्र्या
गोमूत्रंपुनर्मनेतिगोमयमाप्यायस्वेतिपयः दधिक्राव्णइतिदधितेजोसीत्याज्यंदेवस्यत्वेतिकौशकूर्चंमधुवातेतिमधुत्वा
दुरितिशार्करांक्षिप्त्वायुवासुवासाइतिवस्त्रेणसूत्रेणवाकुंभकंठमावेष्ट्यपूर्णादर्वीतिपूर्णपात्रेणपिधायततः प्रागुदग्वाचतु
र्दिक्षुचतुरःकुंभान्मध्येचैकंप्रत्येकुंमंत्रावृत्त्यापदार्थानुसमयेनजपार्थंसंस्थाप्यरौद्रकुंभेसौवर्णप्रतिमायांत्र्यंबकंवसिष्ठोरु
द्रोनुष्टुप्रुद्रावाहनेविनियोगः त्र्यंबकमितिरुद्रमावाह्यपूजयेत् ततरुद्रकुंभंस्पृष्ट्वैकर्त्विक् याजुषश्चेद्रुद्रैकादशिनीव
ह्वृचश्चेत्त्रीणिरुद्रसूक्तानिछंदोगाश्चेद्रुद्रसामानिजपेत् सूक्तसांख्याज्यामकहित्य्रशैकादशावृत्ति शक्तितोह्वेषा कद्रुद्रा
येतिनवर्चस्यघोरकण्वोरुद्रोगायत्रीजपेत् २ इमापरुद्रायतवसेइत्येकादशर्चस्यकुत्सोरुद्रो आघानवजगत्यौत्त्यानुष्टुभौ
आतेपितरितिपंचदशर्चस्यगृत्समदोरुद्रस्त्रिष्टुप्जपेविनियोगः सामानितु आवोराजानंवामदेवोरुद्रस्त्रिष्टुप्तमुष्टुहिभो
मोत्रीरुद्रस्त्रिष्टुप्भुवनस्यपतिमृजिश्वारुद्रस्त्रिष्टुप्जपेविनियोगः ततोन्यस्यऋत्विक्जपार्थंकुंभपंचकेप्राक्क्रमेणजपे
त् आशुःशिशानोइतित्रयोदशर्चस्येंद्रोप्रतिरथऋषिरिंद्रोदेवताचतुर्थ्यावृहस्पतिस्त्रिष्टुप्अंत्यानुष्टुप्जपेविनियोगः द

क्षिरो त्वमग्नि त्वमग्ने रुद्र इत्यनुवाकस्य हव्यवाह ऋषिः अग्न्यात्मा रुद्रो जगती जपे० पश्चिमे रक्षोणो अग्न इत्यस्य वामदेवो
ग्निस्त्रिष्टुप् जपेद्वि० उत्तरे रक्षोहणामिति पंचविंशत्यांगिरसः वायुरग्निस्त्रिष्टुप् ततो मध्यकुंभे जपेत् त्र्यंबकं वसिष्ठो रु
द्रोनुष्टुप् अत्रैव पावमानमपि सूक्तं जपेत् एवं षट्कुंभासक्तो रुद्रकुंभे चतुः प्रेष्यवर्णा वेति कुंभद्वयं संस्थाप्य रुद्रैकादशिन्या
दि रुद्रकुंभं जपित्वा प्रतिरथ्यादीनि चत्वारि प्रश्नवर्णेषु त्र्यंबकमंत्रं पावमानीश्च मध्यमुखे जपेत् अथाचार्यो रुद्रकुंभान्नैभ
ऋत्ये स्थंडिलेग्निं प्रतिष्ठाप्य तदीशान्यां नवग्रहस्थापनं कलशान्वान्वाध्यात् तद्यथा समिधद्वयमादायास्वांमू[illegible]णांतौ देवत
परिग्रहार्थं अन्वाधास्ये ॥ऽ॥ स्मिन्नन्वाहिते ग्नौ इत्यादि चक्षुषी आज्येनेत्यंतमुक्त्वा नवग्रहानधिदेवताप्रत्यधिदे[illegible]लोक
पालस्विनापकार्थं श्च प्रत्येकममुकसंख्यया समिच्चर्वाज्यै निर्ऋतिं प्रतिद्रव्यमष्टोत्तरशतसंख्यया इमं पञ्च प्रत्ये[illegible]मष्टाविंश
तिसंख्यया घृताक्तपायससमिदाज्यचरुभिर्विश्वेदेवा याश्चतुर्विंशति ऋक्षदेवताः सापाश्च रुद्रजापिने कलशं धेन्वा घलाभे
तन्मूल्यं वा दत्वा स्वशक्त्या ऋत्विग्भ्यो दक्षिणां भूयसीं दत्वा नरपूजां कृत्वा पांतिविति विसृज्याचार्याय निर्ऋतिग्रहप्रतिमां कुंभा
दि रुद्रजापिने रुद्रप्रतिमां कुंभादि संकल्प्य पूर्वकं दत्वाग्निमभ्यर्च्य गच्छ गच्छेति विसृज्य पात्रं तद्धेदशावा ब्राह्मणान् भोजयि
त्वा शांत्याशीर्वो वाचयित्वा पयस्य स्मृत्यैतु त्वा सस्वजनो भुंजीतः इति श्रीनीलकंठकृतभास्करे शांतिमयूखे मूलाश्लेषाशांतिप्रयो

पां॰म॰ गः अथवैधृतव्यतीपातसंक्रांतिशांतयः शौनकः कुमारजन्मकालेतुव्यतीपातश्चवैधृतौ संक्रमश्चरवेस्तत्रजातोदारिद्य
६३ कारकः दरिद्राणीमहादुःखंव्याधिपीडासमुद्भवं अश्रियोमृत्युमाप्नोतिनात्रकार्याविचारणा स्त्रीणांचशोकंदुःखंवसर्वना
शकरंभवेत् शांतिर्वापुष्कलाकार्यातस्यदोषोनकश्चन गोमुखप्रसवंकुर्याच्छांतिकुर्यात्प्रयत्नतःजयाभिषेकदानैश्च
होमादपिविशेषतः नवग्रहमखंकुर्यात्तस्यदोषोपशांतये प्रथमेगोमुखंजन्मततः शांतिंसमारभेत् गृहस्यपूर्वदिग्भा
गेगोमयेनानुलिप्यच अलंकृतेसुदेशेतु व्रीहिराशिंप्रकल्पयेत् पंचद्रोणमितंधान्यंतदर्धंतंदुलेनच [illegible]दर्धंतुतिलैः।
तुर्यांशस्तोपिपरिकल्पयेत् त्र्यंत्रितयराशौतुअष्टपत्रंलिखेद्बुधः पुण्याहंवाचयित्वातुआचार्यंवरणुपासुरा आचार
वंतंधर्मज्ञंकुलीनंचकुटुंबिनंमंत्रतत्वार्थतत्वज्ञंशांतिकर्मणिकोविदं पंचांगभूषणंदद्यात्सद्वस्त्रांगुलीयकं राशौप्र
तिष्ठितंकुंभमव्रणंसमनोहरं तीर्थोदकेनसंपूर्यसमृदौषधीपल्लवं सगव्यगंधरत्नंचवस्त्रयुग्मेनवेष्टमुख्यमेव तन्नौ
अंतुर्विंशाद्दलेषुप्रागादितोविश्वेदेवाः १ विष्णुः २ वसवः ३ वरुणः ४ अजैकपात् ५ अहिर्बुध्न्यः ६ पूषा ७ अश्विनौ
८ यमः ९ अग्निः १० प्रजापतिः ११ सोमः १२ रुद्रः १३ अदितिः १४ बृहस्पतिः १५ सर्पाः १६ पितरः १७ भगः १८ अर्यमा
१९ सविता २० त्वष्टा २१ वायु २२ इंद्राग्नी २३ मित्रः २४ इंद्रः २५ निर्ऋतिः २६ आपः अश्लेषाणांतो २७ इत्येताश्चतुर्थ्यंते

नमोन्तैनामभिः क्रमेणावाह्य पूजयेत् आश्लेषायां नमोस्तु सर्पेभ्य इत्यावाह्य सर्पोरक्तस्त्रिनेत्रश्च द्विभुजः
पीनवक्षकः फलकासिधरस्तीक्ष्णो दिव्याभरणभूषित इति ध्यात्वा तद्दक्षिणतो बृहस्पते अति यदर्य इति बृहस्पतिस्त्रिष्टु
प् इति बृहस्पतिं नदुनरस्तश्चोदीरतां श्चोदीरतां शंखस्त्रिष्टु वितिपितॄनावाह्य चतुर्विंशति दलेषु प्रागादितो भागा
घदित्यन्तर्क्षदेवता आवाह्य पूजयेत् ततोन्वाधानक्रमेण पायसं चरुं ऋच्छसरान् अपपितात्स्वभागांते कृत्वा यजमानेने
त सर्वदेवतोद्देशेन द्रव्यत्यक्ते सर्त्विगन्वाधानक्रमेणार्क्षदेवतातत्तन्मंत्रैर्हुत्वा रक्षोहाघान्वक्ष्यमाणाभिर्जुहुयात् ताश्च
कृणुष्वेति पंचदशर्चस्य वामदेवो रक्षोहा त्रिष्टुप् रक्षोहोमे विनियोगः एवं सर्वत्र गायत्र्या विश्वामित्रः सविता गायत्री
जातवेदसे कश्यपो दुर्गा त्रिष्टुप् त्र्यंबकं वसिष्ठो रुद्रोनुष्टुप् सीरा युंजंति बुधऋत्विक् स्तुति गायत्री तामग्निवर्णां सोभरि दु
र्गा त्रिष्टुप् वास्तोष्पते वसिष्ठो वास्तोष्पतिस्त्रिष्टुप् अग्ने नय अगस्त्योग्निस्त्रिष्टुप् क्षेत्रस्य वामदेवः क्षेत्रपालोनुष्टुप् गणाना
जमदग्निर्मित्रावरुणो गायत्री अग्निं दूतं काण्वो मेधातिथिरग्निर्गायत्री हिरण्यवर्णामिति पंचदशर्चस्य कर्दमानंदचिक्लितें
दिरासुता ऋषयः श्रीर्देवता आद्यास्त्रिष्टुभः तुर्या प्रस्तारपंक्तिः पंचमीषष्ठ्यौ त्रिष्टुभौ सप्ताष्टावनुष्टुभौ त्याम प्रस्तारपंक्तिः प्रत्यृचं स
मिदाज्यचरुहोमे विनियोगः त्वं नः सोम विश्वतो वयोधा इत्यस्य प्रगाथः सोम स्त्रिष्टुप् पापसहोमे वि० त्वन्नः सोम विश्वतो रक्ष

क्षाएजन्तिनिवा पात्तेरुद्रेतिकश्यपोरुद्रः स्वराड्नुष्टुप्‌ चतुर्गृहीताज्यहोमे॰ सप्तमहाव्याहृतीनां विश्वामित्रादयऋषयोऽग्न्याद
योदेवतागायत्र्यादिनिछंदांसि आज्यहोमे॰ भूः भुवः स्वः महः जनः तपः सत्यं एवंहुत्वास्विष्टकृदादिप्रायश्चित्ताहुत्यंतंकृ
त्वालोकपालनवग्रहविनायकादिभ्योनिर्ॠतीद्रादिभ्योरुद्रक्षेत्रपालयोश्चबलीन्दत्वापूर्णाहुतिंजुहुयात्तत्रमंत्रः समुद्रादू
र्मिरित्येकादशर्चस्यवामदेवआयस्त्रिष्टुप् अंत्याजगतीप्रजापतेहिरण्यगर्भः प्रजापतिस्त्रिष्टुप् पूर्णादर्विविश्वेदेवाः प्रा
तकृत्तुनुष्टुप् सप्तते अग्नेसप्तवानग्निर्जगतीपूर्णाहुतिहोमेवि॰ एवंसर्वत्र ततोहोमशेषंसमाप्यप्रधानकुंभदक्षिणतःस्थि
श्वाशतवारंत्र्यंबकमंत्रंजपित्वा तथैवरुद्रकुंभेचस्वस्वोक्तरीत्यारुद्रैकादशिन्यादिजपित्वागंधादिभिः कुंभद्वयगतनि
र्ॠतिरुद्रावभ्यर्च्यऋत्विगाचार्यः सर्वकुंभोदकैर्भद्रासनोपविष्टंसापत्यकलत्रंयजमानंअभिषिंचेत् तत्रमंत्राः अक्षीभ्या
मितितिषण्णांकाश्यपोयक्ष्महानुष्टुप् अभिषेकेवि॰ एवमुत्तरत्र पवस्वविश्वचर्षणइतित्रिंशर्चस्यशतंवैखानसाः पवमानसो
मोगायत्री आपोहिष्ठेतिनवर्चस्यांवरीषः सिंधुद्वीपआपोगायत्री अंतोद्वेनुष्टुभौपंचमीवर्धमानासप्तमीप्रतिष्ठायतद्वद्रे
तिद्वयोः सप्तऋषयोविश्वेदेवाअनुष्टुप्‌ सहस्राक्षेतित्र्यृचस्यप्राजापत्योः यक्ष्मनाशनोपक्ष्महात्रिष्टुप् द्वयोरंत्यानुष्टुप्‌ देवस्य
त्वेतितिभिर्यजुर्भिश्च यज्जाग्रत्तेतिषण्णांशिवसंकल्पमंत्राणांप्रजापतिर्भर्गस्त्रिष्टुप्‌ योसौवज्रधरोदेवोमहेंद्रोगजवाहनः

मूलजातशिशोर्दोषं मातापित्रोर्व्यपोहतु योसौ शक्तिधरो देवो हुतभुङ्मेषवाहनः सप्तजिह्वश्च देवोग्निर्मूलदोषं व्यपोहतु ॥
योसौ दंडधरो देवो धर्मो महिषवाहनः मूलजातशिशोर्दोषं व्यपोहतु यमो मम योसौ खड्गधरो देवो निर्ऋती राक्षसाधिपः प्रशाम
यतु मूलोत्थं दोषं गंडांतसंभव योसौ पाशधरो देवो वरुणश्च जलेश्वरः नक्रवाहः प्रचेता नो मूलोत्थाघं व्यपोहतु यसो
देवो जगत्प्राणो मारुतो मृगवाहनः प्रशामयतु मूलोत्थं दोषं बालस्य शांतिदः योसौ निधिपति देवो खड्गभृद्वाजिवाहनः
मातापित्रोः शिशोश्चैव मूलदोषं व्यपोहतु योसौ पशुपतिर्देवः पिनाकी वृषवाहनः अश्लेषादोषगंडांतदोषमाशु व्यपह
तु विघ्नेशः क्षेत्रपो दुर्गा लोकपालानवग्रहाः सर्वे दुःखप्रशमनं सर्वे कुर्वंतु शांतिदाः आश्लेषाशांतौ तु आश्लेषाऋ
क्षजातस्य मातापित्रोर्धनस्य च भ्रातृज्ञातिकुलस्थानां दोषं सर्वं व्यपोहतु योसौ वागीश्वरो नाम अधिदेवो बृहस्पतिः माता
पित्रोः शिशोश्चैव गंडांतं सर्वं व्यपोहतु पितरः सर्वभूतानां दोषं सर्वं व्यपोहतु सर्पेन सत्रजातस्य वित्तं च ज्ञातिबांधवान् इति
विशेषः ततः तल्लिंगपोः ज्ञापु विश्वेदेवाः शक्रः अभिकः ततो वस्त्रांतरितनिर्ऋतिरुद्रकुंभोदकेन स्नापितो यजमानो धृत
धौतवस्त्रो सापत्यकलत्रः कांस्यपात्रस्थाज्ये रूपं स्वरूपमिति अवेक्ष्य विप्राय दत्वा चार्यादीन् अभ्यर्च्य आचार्याय गां ब्रह्मणेभ्यं
सदक्षिणां दशसंख्यपापापसेन रक्षोहणं कृणुष्वेति षट् चदशाभिः रुद्रशांत्येन सवितारं दुर्गां रुद्रं ऋत्विक्स्तुतिं वा स्तोष्यति अग्नि

शां॰म॰ क्षेत्राधिपतिं मित्रावरुणौ अग्निमेताश्चाष्ट संस्थाप्य कृशरान्नेन श्रियं हिरण्यवर्णामिति पंचदशभिः प्रत्यृचमष्ट संस्थाप्यास
६५ मिदाज्यचरुभिः सोमं त्र्यंपो दशवारं पायसेन रुद्रं चतुर्गृहीतेनाज्येन अग्निं वायुं सूर्यं बृहस्पतिं वरुणमिंद्रं विश्वान्देवान्म
हान्तइति राज्येन शेषणास्विष्टकृतमित्यादि रुद्रोपक्षेपइत्यंतमुक्त्वा समस्तव्याहृतिभिः समिन्द्रपमग्रावाद ध्यात्वा अ
श्लेषां श्रान्तौ तु सर्पान् प्रधानदेवतामधिदेवतां बृहस्पतिं प्रत्यधिदेवतापितॄन् भगाद्यदितिं तत्र देवताश्चेति विशेषः ततः प
रिसमुहनादि पूर्णपात्रनिधानांतं कृत्वाग्नेः प्रागुदग्वा रक्तैः पुष्पैर्वान्तं दुलैश्चतुर्विंशद्दलं पद्मं कृत्वा तत्र प्रागवत् कुंभं सं
स्थाप्य तस्मिन्पञ्च ॐ षधीरिति शतमूलानि तदलाभे विष्णुक्रान्ता सहदेवी तुलसी शतावरी कुशमूलं निक्षिप्य पूर्णपात्रं नि
धाय तत्र साष्टदलं वासो वितत्य तत्कर्णिकायां निष्कं तदर्धं तदर्धं मितां प्रतिमां निर्ऋतिं अग्न्युत्तारणपूर्वकं पंचामृतस्ना
पितां मोषुणो घोरः कण्वेनिर्ऋतिर्गायत्री मोषुण इति संस्थाप्य सत्स्मरेन्निर्ऋतिं श्यामं सुमुखं नरवाहनं रक्षोधिपं खड्गह
स्तं दिव्याभरणभूषितमिति ध्यात्वा तद्दक्षिणतः इंद्रं वो मधुच्छंदा इंद्रो गायत्री तौ द्रस्य तद्गुरतश्चामुं मेधातिथिरापोनुष्टुवि
त्यपां च सौवर्णप्रतिमां संस्थाप्य पदार्थानुसमयेन स्वस्वमंत्रैः स्ताः पूजयेत् तत्र वस्त्रयुग्मं रक्तचंदनकुसुमपुष्पाणि मेषशृंगस्य
धूपः आज्यस्य दीपः पोलिकौदनादि नैवेद्यं ब्राह्मणानां पुरस्थाने सघवमिश्रक्षीरं मांसस्थाने लवणमिश्रं पायसं कृसरापादीनां

नुयेत् तस्योपरिन्यसेत्पात्रंसूक्ष्ममव्रणंसंपुतं प्रतिमांस्थापयेद्विमान् साधिप्रत्यधिदेवतां चंद्रादित्याकृतीपार्श्वेमध्येवैधृति
मर्चयेत् एवमेवव्यतिपातेत्रीणिसंक्रमणस्यच भानोकृत्तरतोरुद्रमग्निंदक्षिणतोयजेत् निष्कमात्रेणवार्द्धेनपादेनापिस्व
शक्तितःप्रतिमांकारयेद्धोमांस्ततस्त्रक्षणलक्षितांप्रतिमापूजनार्थायवस्त्रयुग्मेनिवेदयेत् अधिदेवोभवेत्तत्रूपोश्चंद्रः प्रत्यधि
देवता ततोव्यास्तुतिपूर्वेणतत्तन्मंत्रेणपूजयेत् त्रैपवकेनणमंत्रेणप्रधानप्रतिमांयजेत् तत्स्रूपमितिमंत्रेणस्रूपपूजांसमा
चरेत् आप्यायस्वेतिमंत्रेणसोमपूजांसमाचरेत् उपचारैःषोडशभिर्यद्वापंचोपचारकैः अर्चितागंधपुष्पाद्यैः फलनैवेद्यसमर्प
येत् मृत्युंजयेनमंत्रेणप्रधानप्रतिमांस्पृशेत् अष्टोत्तरसहस्रंवा अष्टोत्तरशतंतुवा अष्टाविंशतिवाचाथपूजायांचस्वा
शक्तितः सर्वसौरमजप्याथसोमोयसोममंत्रतः आनोभद्रेतिसूक्तंचभद्राअग्नेचसूक्तकं जपेत्तुपौरुषसूक्तंत्रैपवकंततः
कुंभस्यद्वाचतुर्दिक्षुजपंकुर्युस्त्वथर्त्विजः कुंभस्यपश्चिमेदेशेस्थंडिलेग्निंप्रकल्पयेत् स्वगृह्योक्तविधानेनकारयेत्तंसंस्क
त्वनस्तं त्रैपवकेनमंत्रेणसमिदाज्यचरून्हुनेत् अष्टोत्तरसहस्रंवाशतमष्टोत्तरंतथा अष्टाविंशतिवाकुर्यात्स्वस्यशक्त्या
नुसारतः मृत्युंजयेनमंत्रेणतिलहोमंसमाचरेत् ततःस्विष्टकृतंहुत्वाअभिषेकंतुकारयेत् समुद्रज्येष्ठामंत्रेणआपोहिष्ठे
त्यृचेनचाअस्मीभ्यामितिसूक्तेनपावमानिभिरेवच त्रैपवकेनतत्स्रूपमाप्यायस्वेतिमंत्रतः युवास्त्वामितिमंत्रेणअभि

षेकंसमाचरेत् सुरास्त्वामभिषिंचंतीत्यादिकोभिषेकमंत्रसमुदायोघृतहोमविधानेद्रष्टव्यः अभिषेकाद्यनंतेवस्त्रमाचार्याय
निवेदयेत् श्वेतवस्त्रधरोभूत्वाभूषणाद्यैरलंकृतः यजमानः स्त्रियापुत्रैः आज्यावेक्षणमाचरेत् आचार्यंपूजयेत्तस्माद्धस्तहे
मांगुलीयकैः गोदानेवस्त्रदानंचस्वर्णदानंविशेषतः तद्दोषपरिहारायजाचार्यायप्रदापयेत् प्रच्छादनपरंदद्यात्ततःशांतिर्भवे
दिति जापकेभ्योब्राह्मणेभ्योदक्षिणाः प्रतिपादयेत् दीनांधकृपणेभ्यश्चप्रदद्याद्भूरिदक्षिणां ब्राह्मणान् शत
संख्याकान् मिष्टान्नैर्भोजयेत्ततान् वंधुभिस्सहभुंजीतयथाविभवसारतः एवंयःकुरुतेमर्त्योनैवदुःखमवाप्नुया
त् आयुरारोग्यमैश्वर्यंमातापित्रोःशिशोरपि अथप्रयोगः कर्तागोमुखप्रसवंकृत्वामासपक्षाद्युल्लिख्यास्यशिशोर्वै
धृतिव्यतीपातसंक्रांत्यावाउत्पत्त्यासूचितस्यारिष्टनिरासार्थं शांतिकरिष्यइतिसंकल्प गणेशपूजास्वस्तिवाचनमातृका
पूजावृद्धिश्राद्धाचार्यादिवरणानिकुर्यात् अथाचार्यः सर्षपविकरणानिकृत्वाप्राच्यांगोमयोपलिप्तभुविपंचद्रोणात्
दर्धार्धमितानुक्रमात् व्रीहितंदुलतिलानन्योन्योपरिराशीकृत्यतत्राष्टदलंविरच्यतत्कर्णिकायांकुंभंसंस्थाप्यतीर्थोदकेना
पूर्यतत्रसप्तमृत्सचपल्लवपंचरत्नपंचगव्याष्टगंधसर्वौषधीःक्षिप्त्वावस्त्रयुग्मेनावेष्ट्यपूर्णपात्रंनिधाय वैधृतव्यतिपातशां
तौमध्येत्रैयंवकमितिरुद्रंतद्दक्षिणेतत्सूर्येतिसूर्यमुत्तरतश्चाप्यायस्वेतिसोमं संक्रांतिशांतौमध्येसूर्यंतद्दक्षिणतोग्निंदूतमि

म

सप्तमिमुनरतो रुद्रं तनत्स्य तिमासावास्य षोडशाभिः पंचभिर्वोपचारैः संपूज्य रुद्रसोमसूर्यप्रतिमाः स्पृष्ट्वाष्टसहस्राष्टशताष्टविं
शतिसंख्यमसंख्यया मृत्युंजयमंत्रमुपन्य घेत्यादि सर्वे सौरमंत्रानाप्यायस्वेति च क्रमाज्जपेत् संक्रांतिशांतौ तु पूर्वं सौरज
पस्ततो मृत्युंजयजपः ततः ऋत्विजः प्रागादिदिक्क्रमेणानो भद्रा भद्राश्च अग्रे सहस्रशीर्षा कद्रुद्रायेति सूक्तानि जपित्वाकुं
भान्तश्चिमे ग्निंसंस्थाप्य ग्रहावाहनादि पूजांतं कृत्वा वादध्यात् तत्र चक्षुषी आज्येनेत्यंते रुद्रसूर्यसोमान् समिच्चर्वाज्यैस्त
न्मंत्रैर्मृत्युंजयमंत्रेण च तिलाहुतिभिरष्टसहस्राष्टाशताष्टाविंशत्यान्यतरसंख्यया शेषं स्विष्टकृतमित्यादि संक्रांतिशांतौ
तु सूर्याग्निरुद्रानिति विशेषः ततः आज्यभागांते स्वाधानक्रमेण हुत्वा बलिदानांते कलशोदकैः समुद्रज्येष्ठा इति सूक्तेना
पो हि ष्ठेति तु चेनाश्रीम्यामिति सूक्तेन पावमानीभिः प्रधानाधिप्रत्यधिदेवतामंत्रैः सुरास्त्वेत्यादि पौराणिकमंत्रैः श्चाभिषि
तो यजमानो भिषेकं वस्त्रमाचार्याय निवेदयेत् आज्यमवेक्ष्य पूर्णाहुतिं हुत्वा आचार्याय धेनुं वस्त्रयुग्मांगुलीयकादिकं त्विग
भ्यश्च दक्षिणां दत्वान्येभ्यश्च भूरिदक्षिणां दत्वा यत्या वा ब्राह्मणान्भोजयित्वा बंधुभिः सह भुंजीतेति वैधृतौ व्यतिपात
संक्रांतिशांतयः अथैकं नक्षत्रजन्मशांतिः गार्ग्यः एकस्मिन्नेव नक्षत्रे भ्रात्रोर्वा पितृपुत्रयोः प्रसूतिश्चेत्तयोर्मृत्युर्भवेदेकस
निश्चयः तद्दोषनाशाय तदा प्रशस्तां शांतिं च कुर्यात् वभि सेचनं वासं पुज्य ऋक्षप्रतिमां तदग्नेदानं च कुर्याद्विभवानुरूपं तत्र शां

शां॰ मं॰ तिंप्रवक्ष्यामिसर्वेषांपंक्तितेनतु शुभर्क्षेशुभेवारेचंद्रताराबलान्विते रिक्तारविष्टीवर्ज्येतुप्रारंभेदिवसेसुधी आचार्यंवरये
६७ त्पूर्वंचतुरष्टद्विजोत्तमाः पुण्याहंवाचयित्वातुशांतिकर्मसमाचरेत् अग्नेरीशानदिग्भागेनक्षत्रप्रतिमांततः तत्तन्नक्षत्रमं
त्रेणअर्चयेत्कलशोपरि रक्तवस्त्रेणसंछाद्यवस्त्रयुग्मेनवेष्टयेत् स्वगृह्योक्तमार्गेणकुर्यादग्निमुखंततः तन्नक्षत्रमंत्रे
णजुहेदष्टोत्तरंशतं प्रत्येकसमिदन्नाज्यैः प्रायश्चित्तांतमेवच ॥ अभिषेकंततःकुर्यादाचार्यः पितृपुत्रयोः वस्त्रालंकारगो
दानैराचार्यंपूजयेत्ततः ऋत्विजांदक्षिणांदत्वाभाषत्रयसुवर्णकं देवताप्रतिमादानेधान्यंवस्त्रादिभिः सह यानशय्या
सनादीनिदद्यात्तद्दोषशांतये भोजयेद्ब्राह्मणान्सर्वान् वित्तशाठ्यविवर्जितः अथप्रयोगः कर्तामासपक्षाद्युल्लिख्यास्य
शिशोः पित्राद्येकर्क्षोत्पत्तिसूचितारिष्टशांत्यर्थंएकनक्षत्रशांतिंकरिष्यइतिसंकल्प्यगणेशपूजनस्वस्तिवाचनेआभ्यु
दयिकाचार्यऋत्विग्वरणानिकुर्यात् अथाचार्योग्नेरीशान्यांकुंभंसंस्थाप्यरक्तवस्त्रयुग्मेनसंछाद्यतस्मिन्पूर्णपात्रोपरि
तत्तन्नक्षत्रदेवतामावाह्यरक्तवस्त्रद्वयेनाछाद्यसंपूज्यप्रतिष्ठाप्यान्वाधायाज्यभागांतंकृत्वातत्तन्नक्षत्रमंत्रेणसमिच्चर्वा
ज्यानिप्रत्येकंअष्टोत्तरशतंहुत्वाहोमशेषंसमाप्यशिशुंतत्पित्रादींश्चाभिषिंचेत् ततः कर्तोत्तरपूजांकृत्वाविसृज्यप्र
तिमादिकंगवादिकंचाचार्यायदत्वाऋत्विग्भ्यश्चप्रत्येकंसौवर्णमाषत्रयात्मिकांयथाशक्तिर्वादक्षिणांदत्वायथाविभवं

पानशयासनादीनि च दत्वा ब्राह्मणान्भोजयित्वा स्वयं भुंजीत इति एकनक्षत्रशांतिप्रयोगः अथ ग्रहणोत्पातशांतिः
शौनकः ग्रहणे चंद्रसूर्यस्य प्रसूतिर्यदि जायते व्याधिपीडा तदा स्त्रीणामादौ तु ऋतुदर्शनात् इत्थं संजायते यस्तु तस्य मृ
त्युर्न संशयः व्याधिपीडा च दारिद्र्यं शोकं च कलहो भवेत् शांतिं तेषां प्रवक्ष्यामि नराणां हितकाम्यया यस्मिन्नृक्षे वि
शेषेण ग्रहणं संप्रजायते तदृक्षाधिपतेरूपं सुवर्णेन प्रकल्पयेत् यथाशक्त्यानुसारेण विजनशाल्यं न कारयेत् सू
र्यग्रहे सूर्यरूपं सुवर्णेन विशेषतः इंदुं चेद्ग्रहे धीमान् रजतेन विशेषतः राहुरूपं प्रकुर्वीत नागेनैव विशेषतः ना
गेन सीसेन शुचौ देशे प्रयत्नेन गोमयेन प्रलेपयेत् तस्योपरि न्यसेद्धीमान् नववस्त्रं सुशोभनं त्रयाणां चैव रूपाणां स्थाप
नं तत्र कारयेत् रक्तांबरं रक्तगंधं रक्तपुष्पावराणि च सूर्यग्रहे प्रदातव्यं सूर्यप्रीतिकराय च श्वेतवस्त्रं श्वेतमाल्यं श्वेतगं
धाक्षतादिभिः चंद्रग्रहे प्रदातव्यं चंद्रप्रीतिकराय च राहवे चैव दातव्यं कृष्णपुष्पावराणि च दद्यान्नक्षत्रनाथेभ्यः श्वेत
गंधानुलेपनं सूर्यं संपूजयेद्धीमान् आकृष्णेनेति मंत्रतः ॥ चंद्रग्रहे च पालाशैः समिद्भिर्जुहुयान्नरः दूर्वाभिर्जुहुयाद्धी
मान् राहोः संप्रीणनाय च समिद्भिर्जलवृक्षोत्थैर्भैशापजुहुयाद्बुधः भेशायनक्षत्राधिपतये आज्येन चरुणा चैव तिलैश्च ॥
जुहुयात्ततः पंचगव्यैः पंचरत्नैः पंचत्वक्पंचपल्लवैः जलैरोषधकल्कैश्च सहितैः कलशोदकैः ५ औषधकल्कैः सर्वौष

शां॰म घृकल्कैः अभिषेकं प्रकुर्वीत यजमानो प्रयत्नतः मंत्रैर्वारुणदैवत्यैरापोहिष्ठादिभिः इमंमेगंगेपितरस्तत्त्वायामीतिमंत्रकैः
६८ अभिषेके निवृत्ते तु यजमानः समाहितः आचार्यं पूजयेत्पश्चात्तु शांतो नियतेंद्रियः तस्मै दद्यात्प्रयत्नेन भक्त्या प्रतिकृतित्रयं दक्षि
णाभिश्च संयुक्तं यथाशक्त्यानुसारतः ब्राह्मणान्भोजयित्वा तु प्रणिपत्य क्षमापयेत् तेभ्योपि दक्षिणां दद्याद्यजमानः समाहितः
अनेन विधिना शांतिं कृत्वा सम्यग्विधानतः अकालमृत्युशोकं च व्याधिपीडां च माप्नुयात् सौख्यं सौमनस्यं नित्यं सौभाग्यं लभ
ते नरः इत्थं ग्रहणातानां सर्वारिष्टविनाशनं कथितं भार्गवेणेदं शौनकाय महात्मने इति चंद्रसूर्यग्रहणप्रसूतिशांतिः
अथ विषघटिकाशांतिः तत्र वृद्धगार्ग्यः विषनाडीषु संजातः पितृमातृधनात्मनां नाशकृद्विषशस्त्राद्यैः क्रूरलग्नेष्टमे पिवा
तद्दोषपरिहाराय शांतिकर्म समारभेत् रुद्रो यमोग्निमृत्युश्च देवताः परिकीर्तिताः सुवर्णेन यथाशक्त्या तत्तल्लक्षणसंयुताः
प्रतिमाः कारयित्वा तु आढकव्रीहिभिः स्थलैः स्थंडिले परिकल्प्याथ कुंभमोषधसंपुतं जलैः संपूर्य संस्थाप्य मृदादि प्र
क्षिपेत्ततः वस्त्रद्वयेन संवेष्ट्य पंचरत्नानि विनिक्षिपेत् कुंभोपरि तु संस्थाप्य चतस्रः प्रतिमास्तथा ततन्मंत्रैश्च संपूज्य गंध
पुष्पोपहारकैः कद्रुद्रायेति मंत्रेण यमाय सोममित्यर्थः अग्निर्मूर्द्धेति मंत्रेण परमृत्सो इति लय एतैश्चतुर्भिर्मंत्रैस्तु क्रमा
दर्चेद्वने तथा समिच्चरुघृतद्रव्यैः प्रत्येकं च यथाक्रमं ऋत्विग्भिश्च सहाचार्यो हुनेदष्टसहस्रकं अष्टोत्तरशतं वापि अष्टा

विंशतिमेववातत्तस्तिलै ; नदेवांस्ततन्मंत्रैश्चकल्पवित् ततोभिषिंचेद्देनंमंत्रैः पौराणिकैः क्रमात् प्रार्थतांभगवानीशः
पिनाकीसर्वतोमुखः तवमूर्तिप्रदानेनसमस्ताभीष्टदोभव इंप्रत्यीतोपमः कलोदंडहस्तः प्रशांतधीः रक्तदृक्पाशभृ
त्कालोमहिषस्थःशिवंकुरु ॥ पिंगलश्मश्रुकेशांतः पिंगाक्षश्चतुरोरगः छागस्थः साक्षसूत्रश्चस्रुग्भिः शक्तिधारकः
तवमूर्तिप्रदानेनममयापंव्यपोहतुदंष्ट्राकरालवदनोनीलांजनसमाकृतिः धृतखड्गगदापाणिर्मसुमेपातुसर्वदा इत्य
मेवंविधैर्मंत्रैर्यथाविधिसमाहितः गोभूहिरण्यवस्त्रैश्चआचार्यंपूजयेत्सुधीः एवंकृतेप्रदानेनविषदोषंप्रशाम्य
ति इतिविषघटिकाशांतिः अथभगंडांतशांतिःप्रोक्तः अश्विनीमघमूलादौत्रिवेदनवनाडिका रेवतीसार्पशाक्रांतेमा
सवह्निरसाक्रमात् अश्विनीमघमूलादौनाडिकाद्वितयंतथा अश्विनीमघमूलानांपूर्वोक्तेवध्यतेपिता पूषादिसर्पपश्चा
त्पंचानतीबाध्यतेतिथिःशोः पित्रघ्नस्तुदिवाजातोरात्रिजातस्तुमातृहा आत्महासंध्ययोर्जातोनास्तिगंडेनिरामयः सर्वे
षांगंडजातानांपरित्यागोविधीयते वर्जयेत्दर्शनंतस्यपावत्षाण्मासिकंभवेत् तस्यशांतिप्रवक्ष्यामिसोममंत्रेणमंत्रि
मान् कांस्यपात्रंप्रकुर्वीतपलैः षोडशभिर्नव अष्टभिश्चचतुर्भिश्चद्वाभ्यांवारशोभनंतथा तन्मध्येपापसंभुक्तंनवनी
तेनपूरितं राजतंचंद्रमंचैतसिततपुष्पसहस्रकैः देवश्चक्षौमंवासश्चभुक्तमाल्यांबरार्चितः सोमोहमितिसंचिंत्यपूजा

कु॰ रोदनेदिनः जयेत्सहस्रकंमंत्रंश्रद्दधानःसमाहितः आप्यायस्वेतिमंत्रेणपूजाकुर्यात्समाहितः दद्याद्दक्षिणामिष्टांगं
डदोषप्रशांतये शुक्लांगीभ्यांचैवताम्रपात्रसमन्वितं गंडदोषोपशांत्यर्थं दद्याद्देवविदेशुचिः इतिभगंडांतशांतिः
अथदिनक्षयादिशांतिः गर्गः दिनक्षयेव्यतीपातेव्याघातेविष्टिवैधृतौ मूलेगंडेतिगंडेचपरिघेयमघंटके कालदंडे
मृत्युयोगेदुष्टयोगेसुदारुणे तस्मिन्गंडदिनेप्राप्तेप्रसूतिर्यदिजायते अतिदोषकरीप्रोक्तातत्रपापयुतेसति विचार्य
वनुरूवत्तथाशांतिंकृत्वायथाविधि यजमानोदेवतानांग्रहाणांचैवपूजनं दीपंशिवालयेभक्त्याघृतेनपरिकल्पयेत् अ
भिषेकंपीकरस्यअश्वत्थस्यप्रदक्षिणा आयुर्वृद्धिकरंजाप्यंसर्वारिष्टविनाशनं गुरुदेवतविप्राणांपूजनंगोत्रवर्द्धनं
पुत्रपौत्रपुष्टिशांत्यर्थं अभीष्टफलसिद्धये सर्वारिष्टहयत्नंसमाचरेत् शिवायविधिवद्भक्त्यादीपदानंकरोतियः अखं
डंगोघृतेनैवसवमृत्युंजयेन्नरः विष्णुमूर्तिमहापुण्यामश्वत्थंश्रीकरंसदा प्रदक्षिणंनरोभक्त्याकृत्वामृत्युंजयेन्नरःसर्वं
तपन्नाष्टयर्थंनित्यंकल्याणवृद्धये अभिष्टफलसिध्यर्थंकुर्याद्ब्राह्मणभोजनं अभिषेकंशिवेशांतिःकृत्वाभक्त्यानरो
नमः अकालमृत्युंनिर्जित्यदीर्घायुर्जायतेनरः गाणत्यपुरुषसूक्तंसोरंमृत्युंजयंशुभं शांतिजाप्यंरुद्रजाप्यंकृत्वामृत्यु
जयोभवेत् मूलेवासर्पगंडेवाकुर्यादेतानियत्नतः आयुर्वृद्धिकरार्थायगंडदोषप्रशांतये इतिगर्गोक्तगंडदोषशांतिः॥

अथत्रिकशांतिः शांतिसर्वस्वे सुतत्रयेसुताचेत्स्यात्तत्त्रयेवासुतोयदि मातापित्रोःकुलस्यापितदारिष्टंमहद्भवेत् ज्येष्ठ
नाशोधनेहानिर्दुःखंवासुमहद्भवेत् तत्रशांतिप्रकुर्वीतवित्तशाठ्यविवर्जितः जातस्यैकादशाहेवाद्वादशाहेशुभेदिने आ
चार्यमृत्विजोवृत्वाग्रहयज्ञपुरःसरं सहवाग्रहयज्ञःस्यात्तस्यवित्तानुसारतः ब्रह्मविष्णुमहेंद्रेशाप्रतिमास्वर्णोत्तःकृ
ताःपूजयेद्धान्यराशिस्थकलशोपरिशक्तितः पंचमेकलशेरुद्रंपूजयेद्रुद्रसंख्यया रुद्रसूक्तानिचत्वारिशांतिसूक्तानिसर्व
शः द्विजएकोजपेद्धोमकालेशुचिःसमाहितः आचार्योजुहुयात्तत्रसमिदाज्यतिलांश्चरुं अष्टोत्तरसहस्रंवाशतं वाविंशतितु
वादेवताभ्यश्चतुर्वक्त्रादिभ्योग्रहपुरःसरं ब्रह्मादिमंत्रैरिंद्रस्यपतइंद्रभयामहे ततस्विष्टकृतंहुत्वाबलिंपूर्णाहुतिंततःअ
भिषेकंकुटुंबस्यकृत्वाचार्यप्रपूजयेत् हिरण्यधेनुरेकावस्त्रत्विजांदक्षिणाततः प्रतिमागुरवेदेयाउपस्कारसमन्विताःकां
स्याज्यवीक्षणाद्स्वाशांतिपाठंतुकारयेत् ब्राह्मणान्भोजयेत्पश्चाद्दीनानाथांश्चभोजयेत् एवंशांतिविधानेनसर्वारिष्टं
निरस्यते इतित्रिकशांतिः अथवैकृतशांतिरुच्यते अकालप्रसवानार्यःकालातीतप्रजास्तथा विकृतप्रसवाश्चैवयु
ग्मप्रसवनास्तथा अमानुषाअखंडाश्चअजातव्यंजनास्तथा हीनांगाअधिकांगाश्चजायंतेयदिनास्त्रियः पशवःपक्षि
णश्चैवतथैवचसरीसृपः विनाशंतस्यदेशस्यकुलस्यचविनिर्दिशेत् निर्वासयेत्तान्नृपतिःस्वराष्ट्रात्स्त्रियश्चपूज्याश्चत

मू॰म॰
६९

कृशोदनं द्विजः जपेत्सहस्रकं मंत्रं श्रद्दधानः समाहितः आप्यायस्वेति मंत्रेण पूजां कुर्यात्समाहितः दद्याद्दक्षिणां शिष्टां गं-
डदोषप्रशांतये शुक्लां वा गोश्वं चैव ताम्रपात्रसमन्वितं गंडदोषोपशांत्यर्थं दद्याद्द्विजे शुचिः इति भगंडांतशांतिः
अथ दिनक्षयादिशांतिः गर्गः दिनक्षये व्यतीपाते व्याघाते विष्टिवैधृतौ मूले गडे तिगंडे च परिघे यमघंटके कालदंडे
मृत्युयोगे दुष्टयोगे सुदारुणे तस्मिन्गंडदिने प्राप्ते प्रसूतिर्यदि जायते अतिदोषकरी प्रोक्ता तत्र पापयुते सति विचार्य
वक्ष्ये च तच्छांतिं कृत्वा यथाविधि यजमानो देवतानां ग्रहाणां चैव पूजनं दीपं शिवालये भक्त्या घृतेन परिकल्पयेत् अ-
भिषेकं शंकरस्य अश्वत्थस्य प्रदक्षिणा आयुर्वृद्धिकरं जाप्यं सर्वारिष्टविनाशनं गुरुदैवतविप्राणां पूजनं गोत्रवर्द्धनं
पुत्रपौत्रपुष्टिशांत्यर्थं अभीष्टफलसिद्धये सर्वारिष्टहरं यत्नं समाचरेत् शिवाय विधिवद्भक्त्या दीपदानं करोति यः अखं-
डगोघृतेनैव स च मृत्युंजयेन्नरः विष्णुमूर्तिमहापुण्याम् अश्वत्थं श्रीकरं सदा प्रदक्षिणं नरो भक्त्या कृत्वा मृत्युंजयेन्नरः सर्व-
संपत्प्राप्त्यर्थं नित्यं कल्याणवृद्धये अभीष्टफलसिद्ध्यर्थं कुर्याद्ब्राह्मणभोजनं अभिषेकं शिवे शांतिः कृत्वा भक्त्या नरो
नमः अकालमृत्युं निर्जित्य दोषो यो पूजयेन्नरः गाणत्यपुरुषसूक्तं सौरं मृत्युंजयं शुभं शांतिजाप्यं रुद्रजाप्यं कृत्वा मृत्यु-
जयो भवेत् मूले वा सर्पगंडे वा कुर्यादेतानि यत्नतः आयुर्वृद्धिकरार्थाय गंडदोषप्रशांतये इति गर्गोक्तगंडदोषशांतिः

अथत्रिकशांतिः शांतिसर्वस्वे सुतत्रयेसुताचेत्स्यात्तत्रयेवासुतोयदि मातापित्रोः कुलस्यापितदारिष्टंमहद्भवेत् ज्येष्ट
नाशोधनेहानिर्दुःखंवासुमहद्भवेत् तत्रशांतिप्रकुर्वीतशाठ्यविवर्जितः जातस्यैकादशाहेवाद्वादशाहेशुभेदिने आ
चार्यमृत्विजोवृत्वाग्रहयज्ञपुरःसरं सहवाग्रहयज्ञः स्यात्तस्यवित्तानुसारतः ब्रह्मविष्णुमहेंद्राणांप्रतिमास्वर्णजाःकृ
ताः पूजयेद्धान्यराशिस्थकलशोपरिशक्तितः पंचमेकलशेरुद्रं पूजयेद्रुद्रसंख्यया रुद्रसूक्तानिचत्वारिशांतिसूक्तानिसर्व
शः द्विजएकोजपेद्धोमकालेशुचिः समाहितः आचार्योजुहुयात्तत्रसमिदाज्यतिलांश्चरुं अष्टोत्तरसहस्रंवाशतं वाविंशतितु
वा देवताभ्यश्चतुर्वक्त्रादिभ्योग्रहपुरःसरं ब्रह्मा।दिमंत्रैरिंद्रस्यपतइंद्रभयामहे ततस्विष्टकृतंहुत्वाबलिंपूर्णाहुतिंततःअ
भिषेकंकुटुंबस्यकृत्वाचार्यंप्रपूजयेत् हिरण्यंधेनुरेकावस्त्रत्विजादक्षिणाततः प्रतिमागुरवेदेयाउपस्कारसमन्विताःकां
स्याज्यवीक्षणंदत्वाशांतिपाठंतुकारयेत् ब्राह्मणान्भोजयेत्पश्चाद्दीनानाथांश्चभोजयेत् एवंशांतिविधानेनसर्वारिष्टं
निरस्यते इतित्रिकशांतिः अथवैकृतशांतिरुच्यते अकालप्रसवानार्यः कालातीतप्रजास्तथा विकृतप्रसवाश्चैवयु
ग्मप्रसव नास्तथा अमानुषाअखंडाश्चअजातव्यंजनास्तथा हीनांगाअधिकांगाश्चजायंतेयदिवास्त्रियः पशवःपक्षि
णश्चैवतथैव चसरीसृपः विनाशंतस्यदेशस्यकुलस्यचविनिर्दिशेत् निर्वासयेत्तान्नृपतिः स्वराष्ट्रात्स्त्रियश्चपूज्यास्तत

शां॰ म॰ ७७ तोद्विजेंद्राः चिकित्सनैर्ब्राह्मणतर्पणाच्चततोस्य शांतिसमुपैति पापं इति विकृतशांतिः अथ यमलशांतिः कात्यायनसूत्रे अ
थातो यमलजनने विधिं व्याख्यास्यामो यस्य भार्या गौर्दासी माहिषी वडवा वा विकृतिं प्रसवेत्तस्य प्रायश्चित्तिर्भवेत् सूतकांते दशाहे चतु
र्णां क्षीरवृक्षाणां काषायमुपसंहरेत् लक्षवटोदुंबराश्वत्थशमीदेवदारुगौरसर्षपास्तेषामयो हिरण्यं दूर्वांकुरांश्च यत्नेन वैरष्टौक
लशान्पूरयेत्सर्वौषधीनां दंपतीस्नापयित्वापो हि ष्ठेति तिसृभिः कयानश्चित्र इति द्वाभ्यां पंचेंद्रेण पंचवारुणेन नेदमापः प्रवर्तत्यपाद्य
मिति स्नापयित्वालंकृत्य दर्भेषूपवेश्य तत्र मारुतं स्थालीपाकं श्रपयित्वाज्यभागाविष्ट्वाज्याहुतिर्जुहोति पूर्वोक्तैः स्नपनमं
त्रैः स्थालीपाकस्य जुहोत्यग्नये स्वाहा सोमाय स्वाहा पवमानाय स्वाहा पावकाय स्वाहा मरुतांपते स्वाहा मरुद्भ्यः स्वाहा यमाय
स्वाहांतकाय स्वाहा मृत्यवे स्वाहा ब्रह्मणे स्वाहाग्नये स्विष्टकृते स्वाहेत्येतद्देवगृहोत्पाते भूलूककपोतगृध्रः श्येनो वा गृहं प्रविशे
त् स्तंभः प्ररोहेद्वल्मीकं मधुजालं वा भवेदुदकुंभप्रज्वालनासनशयनयानभंगेषु गृहगोधिकाकृकलासशरीरसर्पणादृत्येवं
छत्रेध्वजविनाशेष्वन्येष्वुत्पातेषु भूकंपोल्कापातकाकसर्पसंगमप्रेक्षणादिष्वेतदेव प्रायश्चित्तं ग्रहशांत्योक्तेन विधिना हुत्वा
आचार्याय वरं दत्वा ब्राह्मणान्भोजयित्वा स्वस्ति वाच्याशिषः प्रतिगृह्य शांतिर्भवति पंचेंद्राणि पदानि यस्मिन्स पंचेंद्रो
मंत्रः एवं पंचवारुणोपि तौ च प्रयोगे वक्ष्यति अथ प्रयोगः मम भार्यायां यमलजननसूचितसर्वारिष्टशांतिद्वारा श्रीपरमे

मस्तुदकंमस्तुदकंप्रतिवृक्षमथापिवा स्थूलतर क्वचित्तुकूलमित्येवपाठः अत्राम्नायामनुक्तायांप्राक्प्रोक्तानामनुसारतः प्र
त्रवारोचतेतत्रमातृणांबलिमाहरेत् कृत्वानीराजनांतेबलिमितिविधिवद्बालमाहृ पतत्रसंस्थ श्याद्भिः समंत्रंशिरसिस
कुसुमैरक्षतैश्चामपिवा क्षिप्त्वाग्नेदेवतायाविधिवदुपहितेस्तत्रगोतैः सुमंत्रैःकुर्याद्दीक्षांसमीक्षस्वपराभिवविल्वपंपातिद
श्चग्रहार्तिः नीराजनमंत्रोद्धारोनारायणीये ब्राह्माविष्णुश्चरुद्रश्चस्कंदोवैश्रवणस्तथा रक्षन्तुत्वरितंबालंमुंचमुंचकुमारकं
फाल्गुणोत्तरे पलाशाश्वत्थकपित्थविल्वोदुंबरपल्लवा पंचभंगास्मृतास्त्वेतेबालानांहितकारकाः स्नापितंधूपितंबालंतनो
मुंचसिसांप्रतं प्रयोगसारेपि पलाशोदुंबराश्वत्थविल्वन्यग्रोधपल्लवाः क्वथितेनकषायेनपरिषिंचेच्चशांतये परिषिंचेत्स्ना
पयेदितिमदनः अत्रमंत्रः ॐ नमश्चामुंडेइत्यादिबलिदानेपूर्वमुक्त रक्षामंत्रः प्रयोगसारे रक्षरक्षमहादेवनीलग्रीवज
टाधर ग्रहैस्तुसहितोरक्षमुंचमुंचकुमारकं अमुंमंत्रंभुर्जपत्रेविलिख्यतत्तत्रभुजेवध्नोपादितिमदनः बालकशिखास्य
त्रीपूर्वकंजपेन्मंत्रउक्तः प्रयोगसारे सर्वमातरइमंग्रहंसंकरंतुहरोदय २ स्फोटय २ स्वाहागर्जे २ सागदह्ल २ आमर्दय २
हिम २ हन २ एवंसिद्धिरुद्रोज्ञापयतिस्वाहा अत्रहोमोपिप्रयोगसारे ॐ कूष्मांडिभगवतिसुरागिणि २ सुमंडितेमुं
च २ दह २ पचसर २ गच्छ २ स्वाहा २ कृत्वाचतुष्पथेकुंडंमंत्रेणानेनमंत्रवित् त्रिरात्रंपंचसत्रवासहस्रंजुहुयामिलैः

शां·म· पीतिदुष्टग्रहाः शांतिं बलिना चानुमोदिताः बालरोदनपरिहारार्थं यंत्रमुक्तं प्रयोगसारे षडस्रमध्ये ह्रींकारं स्रग्मध्ये शिशोर्ना
७१ म विलिख्य षट्सु अस्रेषु ॐ ललुवे स्वाहा इति मंत्रस्य षडक्षराणि विलिख्य तद्बहिर्नेमिवद्वज्रवद्तद्बहिर्विलिख्य तद्ब
हिर घोमुखैर्हैवं द्वैरावेष्ट्य पंचोपचारैः संपूज्य बालहस्ते बध्नीयादिति अथ बालग्रहस्तवः प्रयोगसारे प्रणम्य शिरसा
शांतिगणेशानं तमीश्वरं बालग्रहस्तवं वक्ष्ये समस्ताभ्युदयप्रदं तपसा पद्मासादीस्या वपुषा विक्रमेण च निर्दिशेयः स
दास्कंदस्स नो देवः प्रसीदतु रक्तमाल्यांबरधरो रक्तगंधानुलेपनः रक्तादिसोज्वलः शांतः स नो देवः प्रसीदतु योनंदनः
पशुपतेर्मान्नृणां पावकस्य च गंगोमाकृत्तिकानां च स नो देवः प्र० देवसेनापरिवृतो देवसेनार्चितः सदा देवसेनापतिः
श्रीमान् शांतः शक्तिधरः प्रभुः कुमारः शिखिवाहनः मुरारिहा महासेनः स नो देवः प्र० प्रकृत्या सुंदरोदांतो दैवैश्वर्यादय
न्वितः नानाविनोदसंपन्नः स नो दे० प्रबोधा सुप्रबोधा च बोधना सुप्रबोधना प्रबुद्धा च प्रबोधा च सुप्रीता सुमनास्तथा म
नोन्मत्री तिविख्याता योगिन्यः पांतु बालकं सुपता रुक्मिणी वै च मंदवेगा विभीषणा विद्युज्जिह्वा महानासा शांतानंदात
थापरा बालदा प्रमदा चैति योगिन्यः पांतु बालकं हरिणी चाथ वाराही वानरी क्रोष्टुकी तथा कवेरी कोटराक्षी च कुंभकर्णी
च चंडिका बलाह्निकारिणी चेति योगिन्यः पांतु बालकं शुद्धा विशुद्धा श्रद्धा च योगसिद्धामितं वदा सुभगा शुभदा गौरी च ला

भ्वरश्रीत्यर्थंकात्यायनपरिशिष्टोक्तानि सग्रहमखांपमलशांतिंकरिष्य इति संकल्प्य गणेशपूजनाचार्यवरणांतंकुर्यात् ततः आ
चार्यो यदत्रसंस्थितमिति सर्षपान्विकीर्य पूर्वस्यां पूर्वादिक्रमेणाष्टौकलशान्महीद्यौरित्यादिनाक्षीरवृक्षत्वक्कषायप्लक्षवटउदुंब
राश्वत्थशमीदेवदारुशाखागौरसर्षपहिरण्यदूर्वांकुरपंचपल्लवसर्वौषधीपुनान्स्थापयित्वातज्जलेन यजमानं सपत्नीकंस्नाप
यित्वा तत्र मंत्राः आपोहिष्ठेति तिसृणा अंबरीषः सिंधुद्वीप आपो गायत्री अभिषेके वि० कयानश्चित्र इति द्वयोर्वामदेव इं
द्रो गायत्री अभि० त्रातारमिंद्रमग इंद्रस्त्रिष्टुप् अभि० वरुणस्येति वरुणस्योत्तंभनमसि वरुणस्यस्कम्भसर्जनीस्थो वरुणस्य ऋ
तसदन्यसि वरुणस्य ऋतसदनमसि वरुणस्य ऋतसदनमासीद अभि० इदमापइत्यस्य सिंधुद्वीप आपोनुष्टुप् अभि० अ
पाघमपकिल्बिषमपकृत्यामपोरपः अपामार्गत्वमस्मदपदुःस्वप्न्यं सुव अभि० ततो वस्त्राद्यलंकृतैनौ दंपती दर्भे ४५
षूपवेश्याचार्योग्निस्थापनंकुर्यात् तत ईशान्यां ग्रहस्थापनातेन्वाधानं अस्मिन्नन्वाहितेग्नावित्यादो उक्त्वा अत्र प्रधानं
ग्रहांस्तमिद्वर्वाज्यैः अपस्तिसृभिः इंद्रं तिसृभिः वरुणमेकया अपो द्वाभ्यांमाज्येन अग्निंसोमं पवमानं पावकं मारुतं तःय
मं अंतकं मृत्युं एकैकया चर्वाहुत्यां शेषेण स्विष्टकृतमित्यादि ततोन्वाधानादिक्रमेण होमं समाप्य बलिदानपूर्णाहुति
भिरभिषेकदक्षिणादानांतंकृत्वा शततमब्राह्मणान्भोजयित्वा स्वस्ति भवंतो ब्रुवंतु इति वाचयित्वा तैः स्वस्तीत्युक्त्वा तेभ्यः आ

त्रिषोग्रहस्तो यादिति अथब्राह्मणं तदाहुर्य आहिताग्निर्यस्य भार्या गौर्वा यमौ जनयेत्का तत्र प्रायश्चित्तिरिति सोऽग्नये मरुत्व
ते त्रयोदशकपालं पुरोडाशं निर्वपेत्तस्य याज्यानुवाक्ये मरुतो यस्य हि क्षये रुद्रवेदव रमा अवेहेवेत्याहुतिं वाहवनीये जुहुयाद
ग्नये मरुत्वते स्वाहेति सा तत्र प्रायश्चित्तिरिति कारिका अथ यस्य वधूर्गौर्वा जनयेद्यमौ ततः समरुत्यश्वरुं कुर्यात्पूर्णाहु
तिं यथाविधि इति यमलशांति अथ प्रथमदिनादिषु देवीगृहीतबालकरक्षणं मदनरत्ने योगसारे प्रथमेऽहनि गृह्णा
ति बालकं वालिनी ग्रही यापिनी ग्रहीतिनारायणीति पाठः गांधारीति पुराणांतरे तया गृहीतमात्रस्य चेष्टितान्युपलक्ष
येत् गात्रोद्वेगो निराहारो लालाग्रीवानुवर्तनं लिंपेत धातकीलोध्रमंजिष्ठातालचंदनैः धूपयेन्महिषाक्षेण ततो मुंचति सा ग्र
ही लेपनधूपने बालस्य मारायणीये बलिदानानुवृत्तौ मत्स्यमांससुराभक्ष्यगंधास्रक्धूपदीपकैः बलिं दद्यादिति शे
षः बलिमंत्रः प्रयोगसारे ॐ नमो भगवति चामुंडे विद्युज्जिह्वे हीर हीर अवसरंतु ग्रहा हुतध्यथागच्छंतु पातान्यतः
स्थाने रुद्रोत्तापयति स्वाहा विद्युज्जिह्वे हां ह्रीं हुं हुं मुंच मुंच स्वाहा इति बालग्रहाणां विद्येयं शस्ता बलिनीवेदने बलि
श्चरवे हृदये स्तादिना ह्वेवादेयः बलिस्थानावी प्रयोगसारे कदंबश्च करंजश्च विनीतो निंबएव च अश्वत्थोदुंबरश्चैव श्ले
ष्मातकवटौ तथा मातृवृक्षा क्रमेणोक्ताः पूर्वादिशांतदिग्गताः तेषामेकं समाश्रित्य बलिं दद्याद्यथोदितमिति पतिस्थूल

विकारिणीतिच नानाविज्ञानविख्यातायोगिन्यः पांतुबालकं लंबाप्रलंबाचतथालंबकर्णीचलंबिका ज्वालाकराली
कालिंदीकालिकेतिप्रचोदिता स्वच्छंदाचारसंपन्नायोगिन्यः पांतुबालकं प्रणीतासुप्रणीताचमालिनीविश्वमालिनी विम
लाकमलामालीलोलारौद्रीचविश्रुता विचरंत्सायथाकामंयोगिन्यः पांतुबालकं वायुवेगामहावेगासुवेगावेगवाहिनी श
शिनीहंसिनीत्वष्टा पुष्टिः पौष्टिकसिद्धिदा दिव्यानुभावावाहिन्योयोगिन्यः पां० भ्रमिणीभामिणीनित्यानिर्भिन्नासुभगा
गुहाल्केदिनीद्राविणीवामायोगिन्यः पांतु० रुद्रशक्तिविनिष्क्रांतामेकाशीतिक्रमोदिता योगिनिवृंदमेतद्धि सिद्धविद्याधरार्चि
तास्कंदग्रहाधिदेवंतद्बालकं पातुसर्वदा शकुनीरेवतीदेवीशिखान्वमुखमंडिका प्रलंबापूतनाख्याचकठपूतनिकापुनः
विजयागोमुखीधूम्रामुंडमालातथापरा अधोलंबाचपश्चाच्चकुमुदाप्यथचंडिका भ्रामणीचेककालीचदेवीप्रेतमुखी
तथा ऐंद्रीमार्जारिकाभूपः कुरंगाचसुभाल्कशा कालरात्रिश्चमापावीहोलिकापिल्लिपिच्छिका भीताररणीचक्रवाराभीष
रगदुर्जयापरा तापनीकटकालीचमुक्तकेशामहाबला अहंकारीजयातद्वद्जमेषात्रिदंडिका रोदनीमुकुटाभिख्याच
ललाटापिंगलातथा सीतलावालिनीचैवतापसीपापराक्षसी मानसीघनदादेवीवस्त्रदावर्तिनीतथा यमुनाजातवेदा
चमालिनीकलहंसिनी वालिकादेवदूतीचवायसीपक्षिणीतथा स्वच्छंदावालिकाचैववासिनीनादिकेतिच पंचाशत्तु

गि
शा·म कुलोत्पन्न चतुष्षष्टसमीरिता योन्योनिससंतुष्टाः स्कंदापस्माःदेवता नानारक्षाधिकारस्थावालकंपांतुसर्वदा महालक्ष्मी
७३ महांतकामहासेनामहावलाः महाकंपामहाभीमामहासीमामहोत्सवा महासेनामहाचंडामेहिनीवीरनायकी एक
वीराविशालाक्षीसुकेशीसुमनात्तथा सुकेशिनीचसंतुष्टादंडिनीचविलंविनी भामिनीचाथसौवर्णीसिंहवक्राकरा॥
किनी भ्रमराचंचलाचंडालासिद्धदापरा शाकोदरीधृतिः स्वाहास्वधास्याचसनातनी शेवरात्वत्तथादेवीनीलग्रीवात्तथा
विका वितलागंधिनीवामाक्रीडंतीचैववाहिनी कार्षणीमालतीफुल्लकालकर्णीचचंडिका चित्राननागुहाचेतिपार्व
तीसंगनिर्गता पंचाशत्तिवसंपन्नाशाकुनीदेवतप्रिया योगिन्यः कामरूपिण्येवालकंपातुसर्वदा विभूतयाप्रभावत्तास
र्वहासर्वगागुहा दुर्गासरस्वतीज्येष्टाश्रेष्टापद्मापरापरा प्रमादारोहिणीसीताप्रहप्रह्लादिनीविभा विभूतिर्वित्ततिःप्री
तीःप्रकृतिःप्रमतिर्यथा एताभगवतीस्रष्टायोगिन्योयोगसिद्धिदा पंचविंशतिराख्यातारेवतीशक्तिगोचरा जगदाथाप्र
करावालकंपांतुसर्वदा नंदश्चैवोपनंदश्चगोमतिःसुमतिस्तथा विद्युज्जिह्वोमहाकालः कराकस्तिमिलोचनः तेजहा॥
डाविरूपाक्षगोमुखोवडवामुखः कालाननः करालश्चशंकुकर्णोविभिषणः एतेसकुंदनोपन्नावीराः षोडपराक्षसाः
स्तनादेवतानुष्टावालकंपांतुसर्वदा वज्रीणीशक्तिनीचाघादडिनीखड्गिनीत्तथा पाशिनीध्वजिनीदेवीगदिनीशूलि

नीपरा यजिनीचक्रिणीचेतिसर्वाकाराभयप्रदाः येतादिङ्निताद्देव्योयोगिन्योदेवकीर्तिताः अधिभूतप्रधानापापापास्या
रातप्रजना प्रसन्नामातरः सर्वाबालकंपांतुसर्वदा अर्थकोजलकोभूमः [illegible]कंदश्चकीर्तितः वीरत्राणपितृभिः सृष्टानेग
मेषाधिदेवताः पंचशक्तिप्रधानास्तेबालकंपांतुसर्वदा भैरवावीरमातावक्षेत्रपालाविनायकाः डाकिन्योरुद्रशाकिन्यो
पक्षरक्षासिपन्नगाः वाय्वावातराभूतामनुष्याः पशवोमृगाः सरीसृपाश्चसंतुष्टाबालकंपांतुसर्वदा आदित्यावसवोरु
द्राश्चितरोमरुतस्तथा मुनयोमनवः कालाग्रहयोगाः सनातनाः सिद्धासाध्याश्चगंधर्वादेव्यश्चाप्सरोवराः विद्याधरा
महादैत्याबालं० सहजायोगजाश्चैववीरजामंत्रजास्तथा योगिन्योयोगविनियोनानाविभवगोत्वराः भवानीनामसंतुष्टा
बालं० भूर्लोकेचभुवर्लोकेस्वर्लोकेयाश्चमातरः अधश्चोर्ध्वेचतिर्यक्चक्रीडंत्योनंतमूर्तयः प्रसन्नयोगसंपन्नादिव्य
रूपसमन्विता स्वछंदयोगसंभूतैःभैरवैःपरिवारिता रक्षंतुबालकंशांतिं पठंतुचेतसासदा दिव्यस्तोत्रमिदंपुण्यंबाल
रक्षाधिकारकं जयेत्सतानरक्षार्थंबालद्रोहोपशांतये इतिबालस्तवः इदंचस्तवांतंकृत्स्नंआद्यवर्षमासयोः द्वितीयादि
दिनमासवर्षेष्वपिकार्यं विशेषस्तूच्यतेकुमारतंत्रे प्रथमेदिवसेमासेवर्षेवायोगिनीतदा अथवानंदिनीनाम्नापूतना
क्रमतेशिशुं तद्गृहीतस्यबालस्यज्वरःस्यात्प्रथमंततः गात्रशोषश्चवैवर्ण्यंनाहाछाभृशंभवेत् छर्दिर्मूर्छाचकंपश्चहि

शां॰म न्त्वरपुतस्तदा विधानंतत्रवक्ष्यामियेनमुंचतिपूतना नदिमृत्तिकयाकुर्यात्स्त्रीभनोपुत्तलिकांततः भुक्तौदनंसुरुक्तांधस्त
७४ थाश्रक्चानुलेपनं सुक्रपुष्पाणिचपंचध्वजाःपंचप्रदीपकाः स्वस्तिकाःपंचपूर्वान्हेपूर्वस्यांदिशिसंपुतः वलिंदद्याद्द्धो
शीरश्वेतसर्षपमेववा शिवनिर्माल्यमार्जारनृकेशान्निवपत्रकं गव्यंघृतंचेस्यनेनधूपयेच्चैववालकं एवंदिनत्रयंकृत्वाच
तुर्थेशांतिवारिणा स्नापयेद्बालकंपश्चाद्भोजयेच्चापिभिक्षुकं क्षीरेणभोजयेद्देवंसुस्थोभवतिवालकः शांतिवारिणेतिप्रा
न्नइंद्राग्नीशंनोवाताइत्यादिकैः स्वस्वशाखापठितैर्मंत्रैरभिमंत्रितंवारिशांतिवारि अथवावक्ष्यमाणमंत्रेणशतंकृत्वोभि
मंत्रितंवारिशांतिवारि द्वितीयदिवसेमासेहायनेवासुनंदनं गृह्णातिपूतनावालंयोगिनीस्वस्तनौपिवा ततोभवेज्ज्वा
रःपूर्वसंकोचोहस्तपादयोः दंतान्खादत्यनिशंनिमीलयतिचक्षुषी आहारंचनगृह्णातिदिवारात्रौवरोदिति अस्थि
रोगंछर्दनंचभवेद्भीतिःपुनःपुनः रुग्णत्वंचजायेतइत्येतच्छिशुलक्षणं तंदुलप्रस्थपिष्टेनविनिर्माणार्थपुत्रिका त्रयोदशध्व
जादीपास्वस्तिकापवलोदना प्रस्थप्रमाणपिष्टेनसिद्धापूपाश्चमत्स्यकाः मांसंचेस्येतदखिलंपश्चिमायांदिशित्यजेत् पश्चि
मायांचसंध्यायांएतद्द्याद्दिनत्रयं भूयः शांतिःस्नानब्राह्मणभोजनानिपूर्ववत् ततोयेदिवसेमासेवर्षेवापूतनाभिधागृह्णी
यायोगिनीवालंततःपूर्वज्वरोभवेत् प्रस्थप्रमाणपिष्टेनपुत्रिकांकारयेततः रक्तौदनंध्वजोरक्तःस्वस्तिकारक्तएवच। रक्त

पुष्पंरक्तंगंधस्तथारक्तानुलेपनं पश्चिमायांचसंध्यायांउदीच्यांनिक्षिपेद्बलिं धूपशांतिस्नान ब्राह्मणभोजनानिपूर्ववत् च
तुर्थेह्निमासेतुवर्षेगृह्णातिबालकं तुषमंडनिकानामपूतनाचाथयोगिनी भीषणाख्याततस्तस्यजायतेप्रथमंज्वरं गा
त्रभंगोस्थितिमूर्ध्नोवैवर्ण्यंचाक्षिमीलनं वैकल्यंश्यामताश्वासःकासोरुचिरतिंगीतं तिलपिष्टमयींकृत्वापुत्तलिकांविल्व
कंटकैः अष्टांगरक्षयेत्पुष्पयुक्तंभुल्कध्वजोर्जुनः स्वस्तिकेद्वेप्रस्थसिद्धंभक्तंतावदफपिकाः त्रिसंध्यंपश्चिमायांबलिंदद्या
द्विशेषतः तावद्पुपिकाइतिअर्धप्रस्थपरिमितेनान्नेनकृताइत्यर्थः गोभृंगंसर्पनिर्मोकंलशुनंशिवेपत्रकं मनुष्यके
शमार्जारलोमान्यजस्यतत्तथा एतैश्चधूपयेदेकनिशिसंध्यात्रयेपिच एकनिशिएकस्मिन्नेवदिने बलिरित्यर्थः शां
तिस्नानमंत्रब्राह्मणभोजनानिच पंचमेदिवसेमासेवर्षेवापूतनाशिशुं विडालिकाख्यागृह्णातिपात्स्यमंजायतेज्वरः
छिन्नाश्वासश्वासश्चशूलंचगात्रभंगोरुचिस्तथा तंदुलप्रस्थपिष्टेनविनिर्मायाथपुत्तलिकां भुक्तोदनंध्वजापंचस्वस्तिका
पंचदीपोज्वला पंचदीपाश्चभुक्तानिकुसुमानिचचंदनं अपराह्णेवृक्षमूलेपश्चिमायांदिशिक्षिपेत् धूपस्तुगोशृंगलशुन
भुजिंत्यादिकंशांतिस्नानमंत्रब्राह्मणभोजनानिच षष्ठेहनितथामासेहायनेचापिबालकं पूतनाशकुनिनामगृह्णातिपात्तद
नंतरं ज्वरमुद्वेजनंगात्रेशोषःश्वासोरुचिस्तथा कासश्चहस्तपादाक्षिसंकोचश्चेतिलक्षणं तंदुलप्रस्थपिष्टेनविनिर्माया

बा॰ तं॰ कपुत्तलिकां कृसरोदनं ध्वजाः पंचकृष्णाः स्वस्तिकपंचकं कृष्णमेवाथ मत्स्याश्च पायसं दुग्धमेव च मांसं चापूपकाः स्थूलाः इमाः प्रस्थपिष्ट
२७ विनिर्मितः पराह्णे पश्चिमास्यां निक्षिपेद्बलिपुत्तलिकां पुत्तलिकां पूर्ववत्कृत्वा पललं मूलपाचितं मत्स्याः पर्पटिकाश्चैव वर
केचित्प्रस्थसंमितं उदीच्यां पूर्वसंध्यायां बलिर्देयः प्रशान्तये अत्र बलिदानयोर्विकल्पः तयोरेव कालयोर्बालकस्य धूपो देयः गो
शृंगलशुनमित्यादिकः तथा शांतिस्नानं ब्राह्मणभोजनं च बलिदानपूजामंत्रस्तु ॐ फट् फट् स्वाहा सप्तमे दिवसे मासे वर्षे वा
शुष्करेवती गृह्णाति पूतना बालं ततस्तस्य प्रथमं ज्वरः गात्रभंगो यविद्वेष आहारे कंपरोदने इत्येतल्लक्षणं तत्र बलिर्देयः
प्रशान्तये प्रस्थसंमितपिष्टेन सम्यक्कृत्वाथ पुत्तलिका सप्तध्वजाः सप्तदीपाः स्वस्तिकाः सप्त चैव तथा पुष्पाणि मत्स्यमांसं च भ
क्ष्यं चैव तु दिशा हरेत् धूपस्तु गोशृंगलशुनमित्यादिकः शांतिस्नानं ब्राह्मणभोजनं च मंत्रस्तु ॐ ह्रीं फट् स्वाहा अष्टमे दिवसे
मासे वर्षे वा क्रमतेशिशुं बिडालिकानामधेया पूतनास्य ततो ज्वरः गात्रभेदो रुधिरं रोदनं नेत्रमीलनं जिह्वाशोषः शि
रस्फोटा आहारद्वेषमेव च अक्षिरोगो भवेदेतद्दिंगितं तद्गृहाद्धि रोः तंदुलप्रस्थपिष्टेन पुत्तलीकारयेत्ततः पायसं मधुसर्पिश्च
क्षीरं लाजाश्च शष्कुली गुग्गुलं मेषमांसं च तथा पर्पटिका अपि ध्वजादीपाश्च त्वारोगंधा नानाविधा अपि सुमनांसि च रक्तानी
त्येवं प्रोक्तो दिक्तो बलिः अमूं समाहरेत्पूर्वसंध्यायां दक्षिणादिशि कृष्णाष्टम्यां वक्ष्यमाणः मंत्रेणानेन मंत्रवित् ॐ नमो नारायणा

पत्रे सोकाविद्रावणाय ॐ ह्रीं फट् स्वाहा अनेनैव कमंत्रेण पूजादिवलिहरणांतं कर्म कुर्यात् धूपस्तु गोश्रृंगलशुनमित्यादिका
शांतिस्नानं ब्राह्मणभोजनं च अत्र कृष्णाष्टम्यां वलिहरणमिति न नीयमार्यः किंतु सति संभवे प्राशस्त्यार्थं अन्यथा तत्रतीक्ष्ण
पांशिशुनाशयतेः नवमे दिवसे मासे हायने वापि वालकं गृह्णाति मृदना नाम्ना पूतना तदनंतरं ज्वरश्छर्दिः तृष्णाध्मान
कासः श्वासश्च तृष्णता गात्रभंगश्च सूलं च विरिन्हान्येतानि वालके प्रस्थमात्रेण पिष्टेन विनिर्माय च पुत्रिका ओदनं मत्स्य
मांसं च पर्यटी चेक्षुमूलिकां निक्षिपेत् पूर्वसंध्यायां उत्तरस्यां वलिं दिशि अत्र मंत्रः ॐ नमो भगवते वासुदेवाय कल्लम
डलेवलिमादाय हन हन हुं फट् स्वाहा धूपस्तु गोश्रृंगलशुनमित्यादिकः शांतिस्नानं ब्राह्मणभोजने दशमे दिवसे मासे हायने
वापि वालक पूतना रेवती नाम्नी गृह्णीयात् वालकं ततः ज्वरश्छर्दिः कासश्वासो शूलं चैवेत्येतदीरितं अन्नद्वेषश्च तत्रापि व
लिर्देयो विचक्षणैः प्रस्थप्रमाणपिष्टेन पुत्रिकां तत्र कारयेत् अष्टांगलेखयेत् तत्र विल्ववृक्षस्य कंटके गुडोदनं च सर्पिश्च
श्वजानां पंचविंशतिः स्वस्तिकानां पंचविंशतिरेव च चत्वारि रक्तपुष्पाणि एतत् दक्षिणादिग्गतः संध्यायामेव वक्ष्यमाणमंत्रेणान्ने
न निक्षिपेत् ॐ नमो भगवते वासुदेवाय हन हन हुं फट् स्वाहा धूपो गोश्रृंगलशुनमित्यादि शांतिस्नानं ब्राह्मणभोजनं च एकाद
शे दिवसे मासे हायने पूतना रिविका गृह्णाति वालकं पश्चाज्ज्वरस्तत्र प्रजायते अन्नद्वेषो मुखशोषो गात्रभंगश्च रोदनं ऊर्ध्वदृ

शं·म क्षिप्रोतल्लक्षणांतद्गृहाच्छिशोः पुत्रिकामाषपिष्टेन रचिताम्शुक्लमोदनं पुष्पाणिपिच्छभुक्तानिध्वजानांपंचविंशतिः स्वस्ति
७६ कानोमदीपानांपंचविंशतिरेवच एतत्सर्वंयमाशायांसन्ध्यायांप्रातराहरेत् अत्रमंत्रः ॐ नमोभवतेनारायणचंद्रहासवज्रह
स्त्रायज्वलदुष्टग्रहाय ॐ फट्स्वाहाधूपस्तुगोभृं० शांतिस्ता० व्रा० द्वादशोदिवसेमासेवर्षेवापूतनाशिशुं अद्भुताख्याग्रग्र
स्तातिज्वरःस्यात्प्रथमंततः रोदनंसर्वदादंतखादनंरक्तनेत्रतारोमांचितत्वापड्क्षेतद्खिलंतस्यलक्षणं तंदुलप्रस्थपिष्टेन
कृत्वातत्रायपुत्रिकां त्रयोदशास्वस्तिकाश्चध्वजादीयांस्तथैवच अपूपामत्स्यमांसंचतथापर्यठिकाअपि एतत्सर्वं दक्षिणास्यां
दिशिमंत्रेणनिक्षिपेत् मंत्रस्तु ॐ नमोनारायणायप्रज्वलद्वज्रहस्तायहर २ शोषय २ पातय २ हन २ दुष्टसत्वानांफट्स्वा
हाधूपस्तुगोभृं० शांतिस्ता व्रा० इतिदेवीगृहीतबालकरक्षणं अथबौधायनोक्ताज्वराद्युत्पत्तौशांतयः जियदिकष्टसंदेहो
वांतिदिनान्यष्टादश अग्निर्देवता अग्निरस्मितिपूजामंत्रः हेमीप्रतिमाघृतधूपोघृतदीपश्चयथासंभवंनैवेद्यंतैर्घृतंहोमद्रव्यं
शांतिभवति अत्रसर्वत्रप्रथमंतत्तद्देवतामंत्रजपः सहस्रादिकः पश्चात्पूजाहोमंदा नादिहोमसंख्याचाष्टोत्तरशतादिव्याधि
तारतम्येनकल्प्यासहस्रंमृत्युनिर्देशोद्वितीयायांदिनानिषोडशब्रह्मादेवताब्रह्मजज्ञानमितिजपपूजाहोममंत्रः अगस्त्य
पः घृतदीपः सर्वत्रशर्करानैवेद्यतिलयवाज्यानिहोमद्रव्यंप्रतिमाचहेमीतृतीयायांदिनानिनवपार्वतीदेवतागौरीर्मिमाये

तिमंत्रः दूर्वाभिः पूजाकुंकुमधूपः गुग्गुलर्वा धूपः घृतदीपः द्राक्षाक्षीराज्यंनैवेद्यंपायसन्त्रिमधुराक्तंदुर्वाश्च होमद्रव्यंप्रतीमा
हेमीः चतुर्थ्यादिनानिषोडशगणपतिर्देवतागणानांत्वेति पूजाहोममंत्रः हेमीप्रतिमारक्तचंदनंगंधंकरवीरादीनिपुष्पाणि
अगरूधूपः लड्डुकानिइक्षुखंडानिनैवेद्यंनारिकेलशकलानिइक्षुशकलानिकदलीफलानिचहोमद्रव्यं पंचम्यादिनान्येक
विंशतिर्नागोदेवताहेमीप्रतिमानमोस्तुसर्पेभ्यइतिमंत्रः चंदनंगंधः सुरभिपुष्पाणिघृतधूपः पयोनैवेद्यंतिलयवाज्यपाय
सन्त्रार्करामधूनियथायोगंहोमद्रव्यं षष्ठ्यादिनानिद्वादशस्कंदोदेवताद्रप्सश्चस्कंदेतिपूजामंत्रः पीतचंदनंरक्तवागंधरक्तानिपुष्प्या
णिजातीपुष्पाणिवाजटामांसीधूपः लड्डुकादिनैवेद्यंफलानिवातिलयवाज्यहोमद्रव्यंहेमीप्रतिमाशांतिर्भवति सप्तम्यादिना
न्यष्टैदिननाथोदेवंता आसत्येनआकृष्णेनेतिवामंत्रः हैमीताम्रजावाप्रतिमाकुंकुमगंधकरवीरादिपुष्पाणिधूपोगुग्गुलः
त्रार्कराघृतसंपुतंपायसंनानाफलानिचनैवेद्यंअर्कसमिधः पायसंहोमंद्रव्यं अष्टम्यात्रयोदशदिनानिईश्वरोदेवतातमीशान्न
मितिपूजामंत्रः राजतीप्रतीमाकर्पूरमिश्रचंदनंबिल्वदलानिअर्कपुष्पाणिनीलोत्पलानिवापुष्पाणि जटामांसीधूपः पायस
नानाभक्ष्याश्चनैवेद्यंत्रिमधुराक्तातिलाहोमद्रव्यंरोगशांतिर्भवति नवम्यादिनान्यष्टादशभगवतीदुर्गादेवताजातवेदसइति
पूजामंत्रः हेमीप्रतिमारक्तचंदनगंधंकुंकुमादिकंवाजपाकुसुमादिपुष्पाणिगुग्गुलधूपः घृतपक्वान्नंनैवेद्यंत्रिमधुराक्तंपायसंहो

मद्रव्यं देव्यै दधिभक्तपात्रादानं तद्भक्तापवा दशम्यां दिनानि पंचविंशतिः यमो देवता हैमी लौही वा प्रतिमा यमाय त्वेति पूजामं
त्रः चंदनं मृगमदश्च गंधः मधूसर्जरसश्च धूपः तिलतैलदीपः बिल्वपत्राणि कृष्णतिलाश्च पूजाद्रव्यं कृशरान्नं नैवेद्यं घृतमधु
तिलमुद्गा होमद्रव्यं एकादश्यां दिनानि सप्त विश्वेदेवा देवता विश्वेदेवास इति मंत्रः हैमी प्रतिमा श्वेतचंदनं गंधः कृष्णागुरुधू
पः घृतदीपः तुलसीपत्राणि पूजायां यवमोदकं नैवेद्यं तिलयवमध्वाज्यं होमद्रव्यं द्वादश्यां दिनानि दश रुद्रो देवता पातं रुद्रेति मं
त्रः हैमी प्रतिमा चंदनं श्रीखंडं अगरुधूपः घृतदीपः पायसं नैवेद्यं चंपकपुष्पं कमलं च पूजायां तिलयवाज्यमधूनि त्रीहि हो
मद्रव्यं शांतिर्भवति त्रयोदश्यां दिनान्यष्टौ त्राशी देवता रौक्मी राजती वा मूर्तिः आप्यायस्वेति मंत्रः पूजादौ श्वेतचंदनं गंधः चं
दनधूपः घृतदीपः दधिशर्करा नैवेद्यं तिलयवास्त्रिमध्वाक्ता होमद्रव्यं शांतिर्भवति चतुर्दश्यां दिनानि द्वाविंशतिः शंभुर्देव
तानमः शंभवायेति मंत्रः रौक्मी राजती वा मूर्तिः श्वेतचंदनं गंधः अर्कपुष्पं बिल्वदलानि वा अगरुधूपः पायसं नैवेद्यं त्रिम
ध्वक्तास्तिला होमद्रव्यं अमायां दिनान्यष्टादश शची देवता यक्षदिति मंत्रः हैमी प्रतीमा कुंकुमादि गंधः नानासुगंधपुष्पाणि कृ॰
ष्णागरुधूपः फेणिकापूरिकादि नैवेद्यं शर्करा घृतपायस होमद्रव्यं पूर्णिमायां दिनानि षोडश चंद्रो देवता दमनकं पूजादिकम
न्यत्सर्वंत्रयोदशीशांतावुक्तं ग्राह्यं इति तिथिदोषशांतिः अथाश्वलायनोक्ता वार शांतिः आदित्यवारस्य रुद्रो देवता पातं रुद्र॰

त्तिमंत्रः हैमीराजतीवाप्रतिमांचंदनगंधः अगरुधूपः घृतदीपः पायसंनैवेद्यंहोमद्रव्यंच सोमवारस्यगौरीदेवतागौरीर्मिमा
येतिमंत्रः हैमीराजतीवाप्रतिमाकुंकुमगंधः सुगंधिपुष्पंअगरुधूपः घृतदीपः नानाभक्ष्याणिनैवेद्यंतिलयवहोमद्रव्यंदेव
भक्तसंतर्पणंच भौमस्यस्कंदोदेवता अन्यत्सर्वंषष्ठीशांतिवत् बुधवारस्यविष्णुर्देवताविष्णोरराटमसीतिमंत्रः हैमंस्वरू
पंपीतचंदनंपीतचंदनंपीतपुष्पंकमलानिच अगरुधूपः घृतदीपः पंचलड्डुकानैवेद्यंतिलयवाज्यहोमः गुरुवासरस्यब्र
ह्मादेवताब्रह्मजज्ञानमितिमंत्रः हैमीप्रतिमाकुंकुमगंधः पर्णपुष्पंगुग्गुलधूपः शर्कराज्यंनैवेद्यंतिलयवधानाघृतंहोम
द्रव्यंशुक्रवारस्यइंद्रोदेवतात्रातारमिंद्रमितिमंत्रः हैमीप्रतिमाचंदनगंधः चंपकपुष्पंअगरुधूपः घृतपक्वंनैवेद्यंतिलयवा
ज्यमधूनिहोमद्रव्यं शनिवारस्ययमोदेवतायमेनदत्तमितिमंत्रः हैमीलौहीवाप्रतिमाताम्रजेतिकेचित् चंदनगंधः कृष्णपु
ष्पंमधूधूपः तिलतैलदीपः मधुमत्स्यान्ननैवेद्यंतिलामधूचहोमद्रव्यंशांतिर्भवति इतिवारशांतिः अथनक्षत्रशांतयः वृ
द्धवसिष्ठः रोगशांतिंप्रवक्ष्यामिरोगार्तानांशरीरिणां वलिपूजागहोमैश्चजपब्राह्मणभोजनैः यस्मिन्धिष्ण्येपदानृणांरोगः संजा
यतेतदा तद्धिष्ण्यपूजाकर्तव्यातत्तदीश्वरतुष्टये सुवर्णेनतदर्धेनतदर्धार्धेनवापुनः धिष्ण्येशप्रतिमाकार्यायथावित्तानुसार
तः ईशान्यामथवाप्राच्यामुदीच्यांदिशिसंलिखेत् तंडुलोपर्यष्टदलपद्मंगोमयमंडले पंचामृतैः सलेपैश्चततन्मंत्रैः पृथक्

स्नाप्यकल्पोक्तमंत्रेणप्रतिमांस्थापयेत्पुनः कर्णिकायांतुसंस्थाप्यध्यात्वादेवंसमर्चयेत् तद्वर्णवस्त्रगंधाद्यैरक्तधूपोपहा
रकैः आरक्तवर्णंकुंभंचपंचत्वक्पल्लवैर्युतं शुक्लवस्त्रस्वर्णरत्नसर्वौषधिसमन्वितं मृत्सुचगव्यसस्यबीजफलक्षोद्रकु
शान्वितं देवस्यपूर्वेतस्थाप्यजलमंत्रैःसमर्चयेत् प्रतीच्यांस्थंडिलेवन्हिंविधिवत्स्थापयेत्ततः मुखांतेजुहुयादुक्तद्रव्येण
ष्टसहस्रकं तिलहोमंव्याहृतिभिरष्टोत्तरसहस्रकं पूर्णाहुतिंचजुहुयात्सम्यग्जपादिपूर्वकं ततःशुद्धोपविष्टस्यरोगि
णः प्राङ्मुखस्यच मंत्रपूतैःकुंभजलैरब्लिंगैर्वारिमंत्रकैः मार्जनंकारयेत्तस्यसम्यग्वक्तकल्पपूर्वकं नीराजनंचशुद्धात्मापूजास्था
नंसमागतः देवंहुताशनंभक्त्याप्रणम्यप्रार्थयेदिति अमृतोद्भवधिष्णेशंपतस्त्वंशंकरात्मजः रोगादस्माच्चतीरक्षत्वंवभ
त्यामिधिष्णपः इतिप्रार्थ्यततोदद्यात्प्रतिमांवस्त्रसंयुतां दक्षिणासहितांभक्त्याआचार्यायकुटुंबिने ब्राह्मणाययथा
शक्त्याब्राह्मणान्भोजयेत्ततः कृत्वानक्षत्रपूजांतेतिथिवासरयोरपि सर्वान्कामानवाप्नोतिरोगीरोगात्प्रमुच्यते अश्वि
न्यामुत्थितोव्याधिर्नवरात्रेणमुंचति देवस्यत्वेतिमंत्रस्यगायत्रीकस्यपोऽश्विनौ श्वेतवर्णौसुधापूर्णकुंभंभोजधरौपृथक्।
चंदनासलपुष्पाज्यगुग्गुलौतुगुडप्रियौ क्षीरलड्डुकभोक्तारौसमिधःक्षीरवृक्षजाः गुडोदनवलिंदद्याद्दीपैःसार्द्धनिश
मुखे भरण्यामुत्थितोव्याधिरचिरान्निधनप्रदः मासेनमुंचत्यथवादेवस्यकुटिलागतिःत्र्यंबकस्यमंत्रस्यप्रोक्ताश्छंदषि

